सूर्य सोमात्मकं चाग्निं विद्धितं लोचन द्वयम् ।
एतयो रन्तरं यद्वै तदग्ने वेदनं स्मृतम् ॥ १४६ ॥
तत्रवै जुहुया त्पूर्वं समिधां सप्तकं क्रमात ।
घृतसिक्तां चतुस्संख्या मेकैकांहि सुपुष्कलाम् ॥ १४७ ॥
प्राक्कुंकुमादिना लिप्तां काष्ठ संख्यान्तु होमयेत् ।
स्नुग्धूपमधुपर्कंच बीजान्याज्यं यथाक्रमात् ॥ १४८ ॥
तत्राग्नि समिधोदाने विशेषोयं विधीयते ।
साधितंसंस्कृतेग्नौमा क्त्निधायाग्रतश्चरुम् ॥ १४९ ॥
समुद्घाट्यावलोक्यादौ सम्प्रोक्ष्या द्व्याम्भसाततः ।
दर्भकाण्ड चतुष्केण साग्निना तदनुस्पृशेत ॥ १५० ॥
तन्मध्ये स्रुक्चतुष्कन्तु मन्त्रैराज्यस्य निक्षिपेत् ।
अथादाय स्रुचन्तत्र तद्वद्दद्या च्चतुष्टयम् ॥ १५१ ॥
चतुरंगुळ मानेना प्यन्नग्रास मथाहरेत् ।
तन्निधाय स्रुचादर्भे तदूर्ध्वे पूर्ववद्घृतम् ॥ १५२ ॥
दद्यादग्नौ चतुष्कंतु क्षिपेदन्नाहुतिं ततः ।
भूयोग्नौ स्रुक्चतुष्कंतु चाज्यस्यापाययत्ततः ॥ १५३ ॥
ततोन्यमाज्यसंसिक्तं प्राग्व त्कृत्वाहुतिं पुनः ।
दद्यात्पूर्व प्रयोगेण त्वेवमेव चतुष्टयम् ॥ १५४ ॥
हुत्वाप्यन्नाहुतीनांच ह्याज्याभ्यां जुहुयात्ततः ।
तदन्ते तांच निर्मुक्तैः कुसुमै र्धूपमिश्रितैः ॥ १५५ ॥
पूजयेच्चतुरो वारा न्मन्त्रैर्वा प्रणवै प्रभुम् ।
ततो मोक्षाप्तये होमं यथाशक्ति समाचरेत् ॥ १५६ ॥
शतपूर्वं सहस्रान्तं दद्या त्पूर्णाहुतिं ततः ।
एकमन्त्र चतुष्केण चतुर्भिश्चतुर्थवा ॥ १५७ ॥
प्राग्वत्पूर्त्तां पुनः कुर्या दर्भै स्सम्मार्ज्यच स्रुचम् ।
यथा भवति निस्स्नेह मथ मारुत्यार्पितेनतु ॥ १५८ ॥

पुरतश्चाम्भसा पूर्वं तांचं पात्रेणं तेन वा ।
प्रागादौ कुण्डबाह्येतु प्रादक्षिण्येन सेचयेत् ॥ १५९ ॥
पवित्रकेणाथ ऊर्ध्वं विनिक्षिप्यकरेणवा ।
शेषं स्वशिरसो 'दद्या ! त्स्वस्थानेथ त्वधोमुखे ॥ १६० ॥
निदध्या द्धोम भाण्डेते भस्मना तदनन्तरम् ।
जलानिर्मथितेनैव ह्यूर्ध्वपुण्ड्रं चतुष्टयम् ॥ १६१ ॥
हृदंसयोर्ललाटेच कुर्या: दीप शिखाकृति ।
एवं परिसमाप्तेतु- अग्निकार्ये पिते सति ॥ १६२ ॥
संविभागः पितॄणांच यथा कार्य स्तथोच्यते ।
कुण्डस्य योनि निकटे दक्षिणाग्रां स्तरेत्कुशान् ॥ १६३ ॥
भद्रपीठ समीपेतु क्ष्मातलेवा तदूर्ध्वतः ।
स्तरोपरि विकायार्थ तिलान् सरजतोदकान् ॥ १६४ ॥
क्रमेण भावये त्तत्र पितॄनथ पितामहान् ।
तृप्तयेह्यथ सर्वेषां देवाय विनिवेद्यच ॥ १६५ ॥
प्रोक्षितान्यन्नपात्राणि चत्वारि कबलानिच ।
स्तरोर्ध्वेतु निधायाथ सम्पूज्यार्घ्यादिना ततः ॥ १६६ ॥
क्रमेण चातुरात्मीयै र्मन्त्रै रप्ययथयोगतः ।
ततस्तु नाम्ना गोत्रेण मन्त्रपूर्वं तिलोदकम् ॥ १६७ ॥
सर्वेषा मर्घ्यकलशा त्प्रदद्याद्य यथाक्रमम् ।
तादर्थ्येनाथ चतुरो विनिवेश्या सनेषुच ॥ १६८ ॥
लब्धलक्षा न्परे तत्वे ब्राह्मणा न्पाधरात्रिकान् ।
प्राङ्मुखं द्वितयं चैव द्वितयं चाप्युदङ्मुखम् ॥ १६९ ॥
सम्पत्त्यभावे प्येकंवा विनिवेश्योत्तराननम् ।
अथ तेषां क्रमा त्कुर्या दर्चनं चातुरात्म्यवत् ॥ १७० ॥

अर्घ्यानुलेपनाद्यैस्तु भोगै र्मन्त्रावसानिकैः ।
तत्तत्कालोचितै स्सर्वै रनुपादेयवर्जितैः ॥ १७१ ॥
तै श्चापि मौननिष्ठैस्तु भवितव्यं सुयन्त्रितैः ।
वाग्यता श्शुद्धलक्षाश्चा प्यन्ने मूर्तौ जनार्दने ॥ १७२ ॥
येऽश्नन्ति पितर स्तेन तृप्ति मायान्ति शाश्वतीम् ।
अत स्सव्यभिचारन्तु मौनं वर्ज्य क्रियापरैः ॥ १७३ ॥
शुभ मव्यभिचारं य त्सत्कार्य सर्ववस्तुषु ।
यदंगसंकेतमय मव्यक्तै र्नासिकाक्षरैः ॥ १७४ ॥
कृतमोष्ठपुटै र्बद्धै मौनं तत्सिद्धिहानिकृत् ।
स्वयमेव सुबुद्ध्याय त्सर्ववस्तुषु वर्तते ॥ १७५ ॥
शब्दै रनुपदिष्टैस्तु तन्मौनं सर्वसिद्धिदम् ।
तस्मा द्वै श्राद्धभोक्तॄणां दिव्यैवा पितृकर्मणि ॥ १७६ ॥
दद्या न्नैवेद्यवत्सर्व मर्यादाभ्यन्तरे ऽग्रत ।
येनाचमनपर्यन्तं कालं तिष्ठन्ति वाग्यताः ॥ १७७ ॥
विधिना नेन वै नित्यं यागयज्ञेतु वैष्णवे ।
संविभागः पितॄणांच कार्यं स्सद्रविणै र्नरैः ॥ १७८ ॥
कृत्वातिलोदकान्तंवा फलमूलै स्स्वशक्तित ।
तदर्थं ग्रासमात्रन्तु दद्या द्गोष्वथ भैक्षुके ॥ १७९ ॥
यस्मा द्दिव्यै र्महामन्त्रै र्दत्तं यत्पूजितेऽच्युते ।
पित्रर्थं मल्पंवा भूरि तत्तेषा मक्षय भवेत् ॥ १८० ॥
पश्चा च्छरीरयात्रार्थ मभ्यर्थ्य परमेश्वरम् ।
लब्धानुज्ञस्तुवैकुर्या त्प्राणयाग यथाविधि ॥ १८१ ॥
भोग्यं नैवेद्यपूर्वन्तु सर्वमादाय पात्रगम् ।
विनिवेद्यच देवाय पवित्रीकृत्यचाम्भसा ॥ १८२ ॥
सत्यरूपाह्यलक्ष्याचा प्यन्नदोष क्षयंकरी ।
चेतसा चातुरात्मीया भावनीयाच भावना ॥ १८३ ॥

रसात्माध्यक्षसंज्ञो वै साधुभावे व्यवस्थितः ।
प्रद्युम्नो भगवा न्रूपे चैतद्वीयेंतु लांगलिन् ॥ १८४ ॥
भोक्ता महात्मा भगवान् वासुदेव स्स्वयं ह्यजः।
चतुःप्रणवसम्भक्तं ततोम्भ श्चुळकं पिबेत् ॥ १८५ ॥
वक्रकुण्डेथ तेनैवा प्यन्नाहुतिचतुष्टयम् ।
हुत्वाचाभिमतै ग्रांसै स्ततोऽश्नीया यथारुचि ॥ १८६ ॥
समाचम्य पुनर्यायां त्प्रयतो भगवद्गृहम् ।
मनोबुद्ध्यभिमानिन स्तन्यस्य धरातले ॥ १८७ ॥
कूर्मव च्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ।
प्रदक्षिणक्रमेतेन त्विवंरूपेण सर्वदा ॥ १८८ ॥
अष्टांगेन नमस्कृत्य ह्युपविश्याग्रतः प्रभोः ।
आगमाध्ययनं कुर्या त्तद्वाक्यार्थविचारणम् ॥ १८९ ॥
प्राप्तेतु संध्यासमये स्नात्वावा जघनावधि ।
क्षाळयित्वा ततःकुर्या द्वासस्संम्परिवर्तनम् ॥ १९० ॥
अर्चयित्वार्घ्य पुष्पाद्यै देवमग्निं यजेत्ततः ।
यथाशक्ति जपं कुर्या दासाद्य शयनं ततः ॥ १९१ ॥
समाधाय बहिर्देवं निरालम्बपदेस्थितम् ।
अप्रयत्नेनवैताव दनिरुद्धेन तेजसा ॥ १९२ ॥
सह तेनैव वै निद्रा यावदभ्येति साम्प्रतम् ।
समुत्थायार्धरात्रेथ जितनिद्रो जितश्रमः ॥ १९३ ॥
कमण्डलुस्थितेनैव समाचम्यतु वारिणा ।
गुरुं देवं नमस्कृत्य ह्युपविश्याजिना सने ॥ १९४ ॥
न्यासं मन्त्रचतुष्केण कुर्यात्संहार लक्षणम् ।
आपादाज्जानुपर्यन्त मनिरुद्धंच विन्यसेत् ॥ १९५ ॥
प्रद्युम्नाख्यं न्यसेन्मन्त्रं नाभ्यन्तं जानुमण्डलात् ।
नाभेराकर्णदेशंतु मन्त्रं सांकर्षणं न्यसेत् ॥ १९६ ॥

आकर्णात् ब्रह्मरन्ध्रान्तं चतुर्थं विनिवेद्य च ।
ततस्त्वभिमतेनैव त्वास्ते पद्मासनादिना ॥ १९७ ॥
स्वात्मना चातुरात्मीय मभिध्यानं समाश्रयेत् ।
समं कायशिरोग्रीवं सन्धाय सह वक्षसा ॥ १९८ ॥
दृङ् नासाग्रगताकार्या विनिमीलित लक्षणा ।
जिह्वा तालुतलस्थाच सान्तरे दशनावली ॥ १९९ ॥
ईषदोष्ठपुटौ लग्नौ धार्ये द्वे बाहुकूर्परे ।
ऊरुमध्यप्रदेशेतु हस्तौ नाभावधोन्यसेत ॥ २०० ॥
अधरोत्तर योगेन वामदक्षिणतः क्रमात् ।
अचलं योगपट्टेन त्वेवं सन्धार्य विग्रहम् ॥ २०१ ॥
संकोच्यापानदेशन्त्व प्युपरिष्टात्तमेवहि ।
विकास्यावर्णहीनेन ह्यर्णेना (?) लक्ष्यमूर्तिना ॥ २०२ ॥
विषयान्तर्निविष्टन्तु क्रमाच्चित्तं समाहरेत् ।
कुर्याद्बुद्धिलीनन्तु तच्च कुर्या त्स्वगोचरे ॥ २०३ ॥
समाधायात्मनात्मानं स्वमन्त्रै स्ततः क्रमात् ।
आजाग्रत्पदभूमेर्वै यथावद्वदतः शृणु ॥ २०४ ॥
मध्याह्न भास्कराकारै स्स्वैः स्वशान्तविग्रहैः ।
स्मरेत्पूर्वोदितं पद्मं चातुरात्म्यैरधिष्ठितम् ॥ २०५ ॥
ततो जाग्रत्पदस्थंचा प्यनिरुद्धंच मन्त्रराट् ।
परावर्त्य शतं बुद्ध्या तदभिन्नेन चात्मना ॥ २०६ ॥
तन्मन्त्रजपसामर्थ्या त्तादात्म्य स्थितिबन्धनात् ।
महिमातु सविज्ञान स्तदीय स्तस्य जायते ॥ २०७ ॥
अभ्यासा द्वत्सरान्तेतु तदद्वैतसमन्वितम् ।
अथ प्रद्युम्नमन्त्रन्तु परावृत्य शतद्वयम् ॥ २०८ ॥

एव स्थितस्य यथा मनोरथ मन्तरायानुपहतस्य फलसिद्धि माह ।

## एकान्तात्यन्त दास्यैक रति स्तत्पद माप्नुयात् ।

उक्तच परमैकान्तिना परिचरणप्रकार मनुक्रम्य तस्य निर्विघ्नत्व श्री पौष्करे ' प्रवृत्तिकालादारम्य आत्मलाभावसानिक । यत्रावकाशो विघ्नाना विद्य ते न कदाचन" इति । एतदेवाभिप्रेत्योक्त श्रीसात्वते " सकल्पादेवभगवान् तत्त्वतो भावितात्मना । व्रतान्त मखिल काल सेचय त्यमृतेनतु ॥ ज्ञातेन बन्ध मयेन भवितव्य सदैवहि । प्राप्तये सर्वकामाना ससारभय भीरुणा " इति । अत "श्रूयतेखलु गोविन्दे भक्तिमुद्वहता नृणा । ससारन्यूनताभीता स्त्रिदशा परिपन्थिन " " सत्य शतेन विघ्नाना सहस्रेण तथातप । विघ्ना युतेन गोविन्दे नृणाभक्ति निवार्यते" इत्यादिक परभक्त्यवस्थागत प्राचीना वस्थाविषय नेतव्य । अत्र भूमविद्यायामिव ऐश्वर्याद्यर्वाचीनपुरुषार्थ प्रतिपादन परमपुरुष प्राप्तिरूप प्रधानतम पुरुषार्थपारम्यसमर्थनार्थतया । उक्तच श्री सात्वते 'प्रत्ययार्थच मोक्षस्य सिद्धय स्सप्रकीर्तिता" इति ॥

अतो मोक्षसाधनत्वमेवास्य शास्त्रस्ये त्यभिप्रायेणाह ।

## तत्प्रधान मिदं शास्त्रं

अत्र यथाह न्यासोपासनरूप प्रापकनिष्ठाप्राप्तृतया निर्दिष्ट पर मैकान्तीना तत्प्राप्यता तच्छन्दन परामृश्यते ॥

अथात्र सङ्गतार्हतादि सगन्धाना शङ्करादिग्रन्थाना भगवदभिप्राय निरुद्धतापनाय उक्तसग्रहप्रकारेण शिष्याणा यथावस्थित समस्तगीतार्थ प्रपञ्चावगाहनाय निगमयति ।

इति गीतार्थसंग्रहः ॥ ३२ ॥

इत्थमेव सर्वनिष्ठसंप्रदायपरंपरागत स्समीचीनो गीतार्थः । नपुनः कुदृष्टि भिरुन्नीतः । सचैव स्वयोग महिमचुळकित परमपुरुषविभूतियुगळ भगवन्नाथमुनि नियोगानुवर्ति श्रीमद्राममिश्रसकाशा द्बहुशास्त्रविद्भि स्समाभि र्बहुश श्श्रुतस्य भगवद्गीतार्थ प्रपंचस्य संग्रहइति मुमुक्षुभि स्संग्राह्यतम इति भावः ॥ ३२ ॥

सारं फल्गुन सारथीयवचसां श्रीयामुनेयोद्धृतम्
विस्पष्टै रिति वेंकटेश्वरकवि र्व्याचष्ट भाष्याक्षरैः ।
यद्वादेपु कुदृष्टिवाह्यकुहनाकोलाहलास्कन्दिभि
र्जंघाले र्जयघोपणावणवणे र्विद्राणनिद्रादिशः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदांताचार्यस्य कृतिपु श्रीगीतार्थसंग्रहरक्षा ।

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ।



# GITARTHA SANGRHA.

By

SRI YAMUNA CHARYA.

*With*

*GITARTHA SANGRAHA RAKSHA*

*A Comentāry*

OF

SRI MATH VADANTA DESIKA

EDITED By

P. B. ANANTHA CHARIAR

Sanskrit Pandit

Printed At The

SRI SUDARSANA PRESS.

CONJEEVERAM.

1901.

Price. As-6

शास्त्रमुक्तावळी – १०

# गीतार्थ संग्रहः

श्रीभगवत् यामुन मुनिवर विरचितः।

श्री कवितार्किक सिंहेन सर्वतन्त्र स्वतन्त्रेण

श्रीमद्वेदान्ताचार्येण विरचितया

गीतार्थ संग्रह रक्षाख्यया व्याख्यया सह।

श्रीकाञ्ची

प्रतिवादिभयङ्करं अनन्ताचार्येण

श्री सुदर्शन मुद्राक्षर शालायां

अमुद्र्यत।

॥ श्रीकांची ॥

इदानी मेतन्मूल्यम्- ० – ६ – ०

श्री ।:

# गीतार्थसंग्रहरक्षा भूमिका।

## गीतार्थसंग्रहः ।

इयंकिल कृतिः भगवद्यामुनमुनीशितुः श्रीभाष्यकार प्राचार्यस्य । अयंहि गुरूत्तमो ऽवततार कलौ ४०१८ ( AD 906. ) धातृ वत्सरे कर्कटमासीयोत्तराषाढायां वीरनारायणपुरे चिदम्बरक्षेत्रसमीपस्थे । पिता महोऽस्य भगवान् नाथमुनिमिश्र. योगमहिमप्रत्यक्षतत्वत्रयः न्यायतत्वयोगरहस्ययो र्निबद्धा योगवलाभ्यक्षिताव शठकोपमुने न्यासविद्यासम्प्रदायं द्रमिडाम्नायसहितां अन्यांश्च सर्वान् साम्प्रदायिका नर्थविशेषान् लेभे । सोयम् श्रीशठमर्षणमहर्षे र्वंश्यो भगवन्नाथमुनिमिश्रप्रशिष्यैः श्रीराममिश्रगुरुभिः कृपया परया गुरुकुलकिंचित्कारप्रवणे स्वस्य बहुशोऽळर्क पत्रोपहारार्पणे नोपगच्छद्भि श्चिरादप्यनुपजात आभिमुख्ये कदाचि त्तदर्पण परिहरद्भि स्थच कुतो नाद्याळर्कपत्रापाक इत्यनुयुक्तेन पाचकेन महात्मा कोपि प्रतिदिन मर्पय न्नाद्यापिपेदिति सूचिते स्वोपसेवनबद्धतृष्णेन परेद्यवि सगौरव प्रतिपाल्यता गुरुणानेन प्रयुक्तै 'दर्शनादेव साधव' इति वचनबला त्कटाक्षमात्रदूरीकृत राजभावप्रयुक्तान्यपर्यादिदोषकथ क्रमा दुपदिष्टशास्त्रार्थसार स्सन्नयास्थत ।

बाल्येच महाभाष्यभट्टारका दधीयानो विद्या मपुनरुच्चारणेना न्यामेव नवीना मक्षरमातृका निर्माय बालका नद्ध्यापयत् । चोळराजसदसि विद्वज्जनकोलाहलनामान पण्डितवर्य मजयत् । अस्य जयपराजययो पणबन्धमारचितवतो राजदपत्यो श्रीरंगाख्यया राजमहिष्या ( आळवन्दार् ) 'रक्षणायागत' इत्यभिनन्दित स्तत्पणबन्धानुसारेण राज्ञार्पित राज्यार्धं न्याय्येन पथा पर्यपाल्यत ।

तस्यास्य गुरूत्तमस्य कृतय - आगमप्रामाण्य , महापुरुषनिर्णय , आत्मसिद्धि , संवित्सिद्धि , ईश्वरसिद्धि , श्रीगीतार्थसंग्रह , श्रीस्तुतिश्चतुश्श्लोकी , स्तोत्ररत्न , इत्यष्टौ ।

अन्यतमो ऽयमेषु श्रीगीतार्थसंग्रहो भगवद्भाष्यकारविरचित गीताभाष्यानुसारेण व्याख्यायि श्रीमता कवितार्किकसिंहेन श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यपदेन तत्सहधर्मचारिणी करुणाकटाक्षलम्भित सर्वतन्त्रस्वतन्त्राबिरुदेन श्रीवेंकटनाथदिव्यघण्टांशेन श्रीवेंकटनाथदेशिकेन ।

सोयं गुरुरवततार काम्यां कलौ ( ४३७० ) तमे A( 1268 ) विभववत्सरे कन्याश्रोणायां विश्वामित्रकुलतिलकस्या नन्तार्य गुरो स्सोमयाजिनो जायायां तोताद्रयंबासमाह्वयायाम् ।

अयंच मातुलेन वादिहंसाम्बुवाहार्येणाध्यापितसकलशास्त्र विंशत्यब्दे विश्रुतनानाविधविद्य त्रिंशद्वार श्रावितशारीरकभाष्य श्रुतप्रकाशिकाशताभिषेककारी तात्पर्यचन्द्रिकया विशदीकृतगीताभाष्यसारार्थ पारिप्लवमतिभिरन्यथोपवर्णयद्भि रर्थजात मुपजाता वैयाकुली मपाकर्तुं सक्षेपाव गीताभाष्यपद्धतिभिरेव स्वयमेन व्याचख्यौ श्रीगीतार्थसंग्रहम् । सेयं व्याख्यानन्दर्थनाम्नी श्रीगीतार्थसंग्रहरक्षा । अस्य कृतयः परश्शताः । तामुच्चाय यावदस्माभि र्मुद्रिता मुद्रयमाणाश्च, मीमांसापादुका शतदूषणा - सेश्वर मीमांसा च ।

व्याख्यानरत्नेन चानेन सह सर्वसम्मान्यस्य गीतार्थसंग्रहस्य मुद्रणं सर्वदेशप्रसृमरया सर्वादिभूतया नागरलिप्या वश्यकर्तव्य मद्रावस्यद्भि रस्माभिरिय मयं शास्त्रमुक्तावल्या मुद्रयतेति भावयन्तु सहृदया ।

इति
श्री सुदर्शन पादपद्मसेवी
शास्त्रमुक्तावलीसम्पादककानुपन ।

कार्यं मप्ययुक्तया वै चातुरात्म्यस्य पूजनम् ।
एकादश्यां नभुंजीत विहित स्तत्र जागरः ॥ ७६ ॥
द्वादश्या मादिदेवन्तु समाराध्य यथाविधि ।
मध्याह्नसमये प्राप्ते विधिव त्तन्मयो न्यसेत् ॥७७॥
भक्त्या शक्त्यातु चतुर एकैकं प्रत्यहं त्वपि ।
गवां ग्रास स्स्वसामर्थ्या छोपनीयो नसर्वदा ॥७८॥
सह पूर्वोक्तदानैस्तु व्रतकर्मपरायणैः ।
प्राप्तेतु तद्दिने भूयः कृष्णपक्षस्य लांगलिन् ॥ ७९ ॥
अर्चनं केशवादीनां त्रिसन्ध्यं मागव दाचरेत् ।
द्वादश्यां सोपवासस्तु न्यस्ये द्दामोदरं प्रभुम् ॥ ८० ॥
दानान्त मर्चनाद्यन्तु सितपक्षोत्त माचरेत् ।
प्राभवेन क्रमेणैव चैवं मूर्त्यन्तरं यजेत् ॥ ८१ ॥
मूर्तिभि श्चाप्ययाख्येन संवत्सर मतन्द्रितः ।
यो यो धिकारी भक्तो वा तस्य तुष्य त्यधोक्षजः ॥ ८२ ॥
षोडशाख्य मतो वक्ष्ये व्रतं धन्यतमं हि यत ।
पूर्वेव द्वात्रिंशमय आषाढ़स्याद्य वासरे ॥ ८३ ॥
गृहीत्वा नियमं कुर्या दाप्रभातादिपूजनम् ।
त्रिसन्ध्यं वामनादीनां विधिवत् द्वादशाह्कम् ॥ ८४ ॥
त्रयोदश्यां ततोभ्यर्च्य चतुर्वर्गप्रदं प्रभुम् ।
आद्यन्त मनिरुद्धादि तदाद्य मपरेऽ हनि ॥ ८५ ॥
तृतीयं पंचदश्यान्तु संशान्तिव्यक्तिलक्षणम् ।
एवं मूर्त्यन्तरे युक्तं चातुरात्म्यं त्रिधा स्थितम् ॥ ८६ ॥
आराध्य परया भक्त्या चैकादश्या मनश्ततः ।
पूर्णं तदर्चनं कृत्वा पंचदश्यां यथाविधि ॥ ८७ ॥
चत्वार स्तन्मयाः पूज्याः श्रद्धापूतेन चेतसा ।
आत्मयागं ततः कुर्या द्दिनान्ते चैनपूर्वकम् ॥ ८८ ॥

एव माध्वयुजे भूयः पर्वादौ प्रारभे त्क्रियाम् ।
पद्मनाभादिमूर्तीना मर्चनं विहितं क्रमात् ॥ ८९ ॥
एकादश्या मनश्चस्तु सर्वं निर्वर्त्य पूर्ववत् ।
सम्प्राप्तेच ततः पौषे यजे न्नारायणादिकम् ॥ ९० ॥
द्वादश्यां तत्त्विद्विषट्कंच तथा व्यूहत्रयं त्वपि ।
चैत्रे तद्दिवसा दादौ विष्ण्वादीनां समर्चनम् ॥ ९१ ॥
विहितं सकृत ज्ञानां सह व्यूहत्रयेणतु ।
विशेषपूजनं कुर्या त्सम्पन्ने वत्सरे सति ॥ ९२ ॥
विभो रग्रे द्विजेन्द्राणां षोडशानां स्वशक्तितः ।
दत्तशिष्ट मन्नंचे दैवीयान्नेन भावितम् ॥ ९३ ॥
हविश्शेषेण संयुक्तं व्रतिनां भोजनं हितम् ।
एव सितेऽसिते वापि ह्युभयो रपि पक्षयोः ॥ ९४ ॥
यथाभिमतमासा द्वै समारभ्य यजे त्क्रमात् ।
एकादशेष्व नाखेशान् पर्वादौतु सकृत्सकृत् ॥ ९५ ॥
द्वादश्यां सोपवासस्तु तन्मासेशमथार्चयत् ।
तत्कारणादि भेदोत्थ चातुरात्म्येन वै सह ॥ ९६ ॥
पुण्य व्रतमिदं विद्धि वृद्धश्री सालसिद्धिकृत् ।
नित्यं सद्वैष्णवैः कार्यं मविरुद्ध मखेददम् ॥ ९७ ॥
प्राक्तर्णीतै र्महाभोगै श्शक्त्या दान समन्वितैः ।
गृहस्थै र्ब्रह्मचर्यस्थै र्वानप्रस्थैस्तु भिक्षुकैः ॥ ९८ ॥
येन येन प्रकारेण वित्तं सम्भृत्य वैपुन ।
नित्यं धर्मा विरुद्धेन भैक्षपूर्वेण सर्वदा ॥ ९९ ॥
कुटुम्बभरणार्थं लाभे भैक्षादिकेतु ये ।
श्रद्धा परमा यत्र बुद्धिमां स्तत्र संयदेत् ॥ १०० ॥
दाता ददाति यत्किंचि त्पूजा पूर्वाहि भक्तितः ।
पृच्छ तदीयमशुभं तिष्ठत्पर्थिजनाश्रितम् ॥ १०१ ॥

परिभूतेतु वै लाभे सन्तोषो यस्य जायते ।
प्रतिग्रहोत्थितो दोष स्तस्य दूरतरं व्रजेत् ॥ १०२ ॥
एवं ज्ञात्वाप्यपात्राणां भक्तानां भावितात्मनां ।
जनये दुर्बुद्धिभेदन्तु नेतरेषां कदाचन ॥ १०३ ॥
यत्र दाता गृहीताच द्वावेव कलुषात्मकौ ।
दृष्टादृष्ट विनाशार्थं दानं द्वाभ्यां हृतं तु तत् ॥ १०४ ॥
प्रागेवं वित्तसंशुद्धिं भावशुद्धि समन्विताम् ।
निश्चयीकृत्य यत्नेन दिव्य मायतनं व्रजेत् ॥ १०५ ॥
क्षुत्संसिद्धये नूनं सिद्धायतनमेववा ।
अथवायतनं रम्य मासन्न नगरादिकम् ॥ १०६ ॥
निर्विघ्नेन व्रतं यस्मा न्निष्पद्येतात्र कर्मिणाम् ।
कर्मवाङ्मनसै श्शुद्ध स्तपो निष्क्रियापरः ॥ १०७ ॥
यो नान्य देवतायाजी तत्वतो भगवन्मयः ।
कस्मिंश्चिद्वैभवे रूपे व्यूहीये वा सुबुद्धिमान् ॥ १०८ ॥
बद्धलक्ष्यो भवे द्भक्तया स्वासागमनिदर्शनात् ।
तस्यापि तादृशानांच भविना मनुकम्पया ॥ १०९ ॥
व्यक्तता भगवद्देव स्स्वयमेव धरात्मना ।
यत्र मोक्षप्रदं विद्धि दिव्यमायतनं हि तत् ॥ ११० ॥
मन्त्रसिद्धैश्च विबुधै र्मुनिमुख्यै स्तथामलैः ।
शान्तंच देशजातान्त्व प्यात्मनश्चापि कीर्तये ॥ १११ ॥
मन्त्राकृति मदं ध्यात्वा पाषाणं वसुधातले ।
पावनं वा ततं वृक्षं ज्ञात्वावा देवताश्रयं ॥ ११२ ॥
कृत्वा तच्छक्ति संरुद्धं विसृज्यच तदाश्रितम् ।
विद्धि सर्वेश्वरस्यैवं स्थितं निलय लक्षणम् ॥ ११३ ॥
स्वमन्त्र सन्निधिं तत्र कृत्वा तद्विग्रहान्वितं ।
पूजितं यत्र पुण्यार्थे स्तत्सिद्धा यतन स्मृतम् ॥ ११४ ॥

फलप्रायेतु विप्रार्थे स्वकुलो द्धारणायच ।
स्थापितं भगवद्भिम्बं ज्ञेय मायतनं हितत् ॥ ११५ ॥
क्रियांगभागं यातस्य सर्वगस्यचवैविभोः ।
विद्धि सर्वेश्वरस्यैवं स्थितं नियत लक्षणम् ॥ ११६ ॥
स्वमन्त्र सन्निधिं तत्र कृत्वा ताद्भिग्रहान्वितं ।
प्रासादद्वार देशाच्च यत्रशंखध्वनिक्षयः ॥ ११७ ॥
पूर्वादिसर्वदिक्काव क्षेत्रं भवति वैष्णवम् ।
सिद्धावतारितादेवा त्संदेताद्विगुणं स्मृतम् ॥ ११८ ॥
त्रिगुणं च स्वयंव्यक्ता द्देहान्ते भावितात्मनाम् ।
फलं सालोक्यता पूर्व परिज्ञेयं क्रमाचतः ॥ ११९ ॥
दुष्टेन्द्रिय वशा च्चित्तं नृणां यत्कल्मषै र्वृतं ।
तदन्तकाळे संशुद्धिं यातिनारायणालेये ॥ १२० ॥
व्रता न्येतानियःकुर्या दभिसन्धाय चेतसा ।
अभीष्ट मतितीव्रेण तदाप्नो त्यचिरात्तुसः ॥ १२१ ॥
श्रद्धधानै रत स्तस्मात दृष्टादृष्टफलाप्तये ।
व्रता न्येतानि कर्तव्या न्यभिसन्धाय चेतसा ॥ १२२ ॥
नायत्नादस्तु कर्तव्यो व्रतभंगा त्कदाचन ।
संकल्पादेव भगवा स्तत्वतो भावितात्मनाम् ॥ १२३ ॥
व्रतान्त मखिलं कालं संचय त्यमृतेनतु ।
दा.वैवं चद्धलक्ष्येण भवितव्यं सदैवहि ॥ १२४ ॥
मात्पये सर्वकामानां संसार भयभीरुणा ॥ १२४ ॥

इति श्री पाञ्चरात्रे श्रीसात्वत संहितायां व्रतविधिर्नाम

सप्तमः परिच्छेदः ॥ ७ ॥

श्रीः ।

श्रीमते रामानुजाय नमः ।

# अथ अष्टमः परिच्छेदः ।

भगवान् –

व्रतमेतदमन्त्रं च सामान्यं सार्वलौकिकम् ।
सितेतर विभागेन प्रोक्तं मन्त्र द्वयं शृणु ॥ १ ॥
मागयं प्रार्थयित्वातु दृष्टा दृष्ट मदस्सद्धि ।
ज्ञात्वा स्थिरमतिः कुर्या त्तदर्थे चक्रमण्डलम् ॥ २ ॥
तन्मध्ये चतुरात्मातु यष्टव्यः कर्णिकोपरि ।
चतुर्दिक्ष्वी क्षमाणस्तु वासुदेवादितः क्रमात् ॥ ३ ॥
हृदादिनेत्रपर्यन्त मंगषट्कं यजेत्ततः ।
अर्घ्यादिभिः क्रमा द्रोगैः र्मंतज्ञेन पुरोहृतैः ॥ ४ ॥
ततः कुण्डान्तरेचैव संस्कृतेग्नौच विन्यसेत ।
चक्रं मन्त्रगणोपेतं समिद्भिस्तर्पये त्क्रमात् ॥ ५ ॥
पश्चात्तण्डुलसम्मिश्रै स्सघृतैर्बहुभि स्तिलैः ।
अर्घ्योदकेन शिरसा पवित्रीकृत्य साम्प्रतम् ॥ ६ ॥
नतजानुशिराश्शिष्यं कृत्वासौ श्रावयेत्प्रभुम् ।
त्वय्याराधनकामोयं व्रतं चरितु मिच्छति ॥ ७ ॥
संकल्पसिद्ध्यै भगव न्पूरयास्य मनोरथान् ।
इति विज्ञाप्य देवेशं ततः पुष्पाणि दापयेत् ॥ ८ ॥
अष्टांगमथवैकुर्या त्प्रमाणं सप्रदक्षिणम् ।
भूयोभूयो ऽनवच्छिन्नं भक्तिश्रद्धापुरस्सरम् ॥ ९ ॥
तत स्तस्योपदेष्टव्यं विधानं मन्त्रपूर्वकम् ।
सांतं षष्ठस्वराक्रान्तं अनुस्वारविभूषितम् ॥ १० ॥

बीजमाद्यस्यच विभो वासुदेवस्य कीर्तितं ।
सदेव जीवबीजस्थं षष्ठस्वरविवर्जितम् ॥ ११ ॥
द्वितीयस्वरसंयुक्तं संकर्षणस्य बीजराट् ।
उभयो रन्तरे रेफ माद्यबीजस्य योजयेत् ॥ १२ ॥
बीजं प्रद्युम्ननाथस्य तृतीयं सर्वकामदम् ।
जीवारूढं हकारन्तुं क्षान्तस्योपरि विन्यसेत् ॥ १३ ॥
विसर्गसहितं बीजं मनिरुद्धस्य वाचकम् ।
द्विभुजा स्सर्वएवैते सूर्येन्दुशत सन्निभाः ॥ १४ ॥
तेजसा त्वत्रभेदोस्ति स्वरूपेण सितादिना ।
दक्षिणोत्तरपाणिभ्यां तर्जनी मध्यमान्तरे ॥ १५ ॥
आद्यस्य चक्रशंखौ द्वौ ध्येयावंसद्वयोपरि ।
स्कन्धसूत्रसमस्थेन दक्षिणेनतु पाणिना ॥ १६ ॥
गृहीता मुष्टिमध्येन विश्रान्ता पीठपृष्ठतः ।
ध्येया गदा द्वितीयस्य तथाभूते करे परे ॥ १७ ॥
संस्मरे द्वेतिराङ्कदीमं लीलाक्षेप इवोद्यतम् ।
एवं प्रद्युम्ननाथस्य व्यत्ययेनतु ते उभे ॥ १८ ॥
दक्षिणोत्तर हस्ताभ्यां श्रोत्रमण्डल सम्मुखौ ।
शंखपद्मौ चतुर्थस्य तथाकृष्टौतु संस्मरेत् ॥ १९ ॥
किन्तुवैपंकजं नाळ मस्यवैपाणिपृष्ठगम् ।
हकारंच सकारस्थं कृत्वा पीढानियेश्यच ॥ २० ॥
द्वितीय तुर्यषष्ठाष्ट द्विषट्कदशकैः क्रमात् ।
स्वरैर्नियोजये द्विद्वि हृदाद्या न्नेत्रपश्चिमान् ॥ २१ ॥
चातुरात्मीय मन्त्राणां साधनत्वेन सर्वदा ।
त्रिधा हकारे कृत्वादौ जीवबीजे तथैवच ॥ २२ ॥
ककारन्च क्षकारंच लिखेत्तद्वात्रिधा त्रिधा ।
द्विषट्कमेव बीजानां क्रमादादौ नियोजयेच ॥ २३ ॥
ततो वायुधरायारि संज्ञं यद्याक्षरत्रयम् ।
पौनः पुन्येन सर्वेषा मधोभागे नियोजयेत् ॥ २४ ॥

सर्वे पष्ठस्वरारूढा अनुस्वारविभूषिताः ।
बोद्धव्याः केशवादीनां बीजास्त्वेते पृथक्पृथक् ॥ २५ ॥
क्षहसत्रितयं होत चतुर्थाविलिखे त्क्रमात् ।
ततोद्विपट्कं बीजानां तस्याधो विनिवेश्यच ॥ २६ ॥
क्रमेण सप्तमाद्वर्गात द्वितीयंच चतुर्थकम् ।
पुनस्तृतीयंतुर्यंच द्वितीयं च तृतीयकम् ॥ २७ ॥
द्वितीयं च चतुर्थंच चतुर्थं तदनन्तरम् ।
तृतीय मष्टमंचाथ तृतीयं सप्तमात्पुनः ॥ २८ ॥
नवम द्वादशाभ्यांतु विशेषमिम(?) मामच ।
अधोनियोजयेद्रेफं तत्त्रयाणांतु मूर्धनि ॥ २९ ॥
पट्सप्तमाष्टसंज्ञाना मिकारमुपरिन्यसेत ।
सानुस्वारांश्च सर्वेषा मितिदेवीगणस्यच ॥ ३० ॥
बीजद्वादशकं प्रोक्तं यथाचानुक्रमेणत ।
श्रीश्च वागीश्वरीकान्तिः क्रियाशक्ति विभूतयः ॥ ३१ ॥
इच्छाप्रीती रतिश्चैव मायाधी महिमेतिच ।
समुद्रमूर्तये स्वाहा पद्मस्य प्रणवादिकः ॥ ३२ ॥
सर्वान्तश्चारिणेकृत्वा ततोगगन मूर्तये ।
स्वाहान्तः प्रणवान्तश्च मन्त्रश्शंखस्य कीर्तितः ॥ ३३ ॥
ओंकारो वेदमात्रेथ विद्ये स्वाहा पदंतुवै ।
गदामन्त्र स्स्वयंप्रोक्त श्चक्रस्याथ निगद्यते ॥ ३४ ॥
ओंकारान्ते पदं दद्यात्पंचार्ण प्रभविष्णवे ।
श्लिष्टौ विकासितौ हस्तौ योज्यौ चामणि बन्धनात ॥ ३५ ॥
तद्बाहुकौ सरौ (?) द्वौच नाभौ संरोध्य दण्डवत् ।
ईषद्वै डोलये त्पश्चा दध ऊर्ध्वंच तौ करौ ॥ ३६ ॥
गुप्तिः कृत्वातु योज्यैषा मुद्राराधनकर्मणि ।
आसाद्य प्राग्स्थिता मर्चां स्वयं वा समुपस्थिताम् ॥ ३७ ॥

सर्वलक्षणसम्पन्नां यस्यां चेतः प्रसीदति ।
हेमादिनिर्मितं कुर्या त्पीठं वा लक्षणान्वितम् ॥ ३८ ॥
समं त्रिभागन्यूनं वा द्वादशांगुळविस्तृतम् ।
चतुरश्रं चतुष्पादं विस्त [ ? ] रार्धेन चोन्नतम् ॥ ३९ ॥
तृतीयं भाग मादाय विस्तराच्च [ विस्तरर्च ] स्वरं स्वकम्
तेन तन्मध्यगं कुर्या त्कमलं लक्षणान्वितम् ॥ ४० ॥
द्विषट्कारन्तु तद्बाह्ये चक्रं सर्वांगचिह्नितम् ।
सिद्धामरनरादीनां हृदयस्थाक्षराच्युति (?) ॥ ४१ ॥
मृदुमुच्चरणाकान्ति निर्मुक्ताकृतिलक्षणा ।
पादाम्बुरुहमुद्राथ कार्यावै कर्णिकोदरे ॥ ४२ ॥
सम्पाद्य चैव माधारं पीठं वार्चान्वितं स्मरेत् ।
पादाब्जमुद्रारहितं कुण्डं तदनु कल्पयेत् ॥ ४३ ॥
फुल्लपद्मसमाकार मोष्ठयोनिसमन्वितम् ।
चलमेकदिशिस्थंवा ततो नियम माचरेत ॥ ४४ ॥
संवत्सरस्य पूजार्थं विभो वै द्वादशात्मनः ।
मार्गशीर्षा त्समारभ्य मासाद्वै कौमुदान्तिमम् ॥ ४५ ॥
मासेशमन्त्रसंजप्तं युक्तं होमकुशाम्बुना ।
दशम्यां पंचगव्यञ्च पिबे त्सम्पूज्य केशवम् ॥ ४६ ॥
तन्निवेदित मन्नंच माग्भुक्त्वातु घृताधिकम् ।
नातीव तृप्तिजनकं दन्तकाष्ठ मथाचरेत् ॥ ४७ ॥
शयनं मंत्रतोयेन प्रोक्षये त्सकुशं ततः ।
शयनस्थो जपे न्मन्त्रं शत मष्टाधिकन्तु वै ॥ ४८ ॥
एकादश्यां प्रभातेथ मध्याह्नेवा दिनक्षये ।
केशवाय नमस्कुर्या द्बहुशः प्रणवादिकम् ॥ ४९ ॥
तस्य वै पूजनं भक्त्या कुर्या त्कालत्रयंतु वै ।
सर्वगं परमं ज्योति रमूर्तं ममहृदि यत ॥ ५० ॥

सएव वासुदेवेति मत्वा सम्य ग्यजे त्ततः ।
चेतसा मृतसंकाशैः पुष्पाद्यै रखिलैः प्रभुम् ॥ ५१ ॥
पश्चात्त ममलं धाम ध्याये न्मुक्त मनश्वरम् ।
श्रोणीतटार्पितकरं सानुकम्प मनूपमम् ॥ ५२ ॥
दक्षिणेनतु हस्तेन भक्ताना मभयप्रदम् ।
पुष्पाभरणवस्त्राढ्यं शंखचक्रद्वयान्वितम् ॥ ५३ ॥
तत स्तस्मात्तु वै धाम्नो युगप न्निस्सृतं स्मरेत् ।
महत्स्फुलिंगसंकाशं महस्तु सततोदितम् ॥ ५४ ॥
तेन चाक्रमराब्रृन्दं समाक्रान्तंच भावयेत् ।
अथ प्रत्येकतेजोंशा दुद्भूतं भावये त्क्रमात् ॥ ५५ ॥
त्रयं त्रयं सिताद्यंच केशवाद्यं चतुर्भुजम् ।
दक्षिणोत्तरपाणिभ्यां पृष्ठतः केशवादिषु ॥ ५६ ॥
युग्मं युग्मं परिज्ञेयं क्रमेणोर्ध्वगतंच तम् ।
शंखचक्र कजंविद्या त्ताथ शंखो थहेतिराट् ॥ ५७ ॥
विद्या चक्रंच तद्विद्या त्पद्म श्शंखश्च सोन्युजम् ।
पद्मध्वनिगदाशंख स्त्वविद्याम्बुरुह स्सवरी ॥ ५८ ॥
भूयो धामगणा त्तस्मा त्संस्मरे न्निस्सृतं महः ।
केशवादिविभागेन श्रियाद्यंच त्रयं त्रयम् ॥ ५९ ॥
कमलादित्रयेणैव त्वन्योन्यत्वेन लांछितम् ।
बद्धपद्मासनस्थंच दिवि दिक्षुच सम्मुखम् ॥ ६० ॥
संवीजयेत्तु विनया च्चामरेण सितेनच ।
देवीद्वादशकंचैव तासां रूप मथोच्यते ॥ ६१ ॥
पूर्णचन्द्रानना स्सर्वा स्सर्वर्तुकुसुमान्विताः ।
सर्वलक्षणसम्पन्ना स्सर्वाभरणभूषिताः ॥ ६२ ॥
विद्रुमाभं त्रयं त्वाद्य मपरं चम्पकप्रभम् ।
प्रियंगुमंजरीश्यामं तृतीयं देवतात्रयम् ॥ ६३ ॥

चतुर्थं त्रितयं ध्याये ज्जातीपुष्पसमप्रभम् ।
आद्यायाः कमलं पाणा वन्यस्याहेलिराट्करे ॥ ६४ ॥
शंखं ध्याये त्तृतीयस्या एवं ध्याये त्रिषु त्रिषु ।
चतुस्त्रिदेवतान्ताना मेव माद्यं त्रयं क्रमात ॥ ६५ ॥
स्नात्वा सम्पूजनं कुर्या ज्जागरेण समन्वितम् ।
स्तोत्रै स्तथाऽनकै र्वाद्यै र्गीतकैः क्षपये न्निशाम् ॥ ६६ ॥
रात्रिक्षये ततः स्नाया त्सिताम्बरधर श्शुचिः ।
मालेशमन्त्रसन्नद्धं कृत्वा देवं स्मरे त्तथा ॥ ६७ ॥
पूजापनयनं कृत्वा स्नानकर्म समाचरेत ।
मध्यतः केशव[केवल]स्यादौ [केशव]केवलस्य महात्मनः ॥६८॥
वासुदेव [ स्य ] स्व रूपस्य चक्रस्थस्य त्वनन्तरम् ।
प्रागरेभिनिविष्टस्य सकलस्या व्ययस्यच ॥ ६९ ॥
तदादिद्वादशानांच दद्या त्स्नानादिकं क्रमात् ।
अम्बुना पंचगव्येन क्षीरेण तदनन्तरम् ॥ ७० ॥
दध्ना घृतेन मधुना सर्वौषधिजलेनच ।
बीजाम्बुफलतोयेन गन्धपुष्पाम्बुना ततः ॥ ७१ ॥
हेम रत्नोदकेनाथ कुम्भस्थेन पृथक्पृथक् ।
सित विलेपनं पुष्पं धूपम्मधुघृतं दधि ॥ ७२ ॥
नैवेद्यं विविधं पूतं व्रीहयोपवसंयुतम् ।
निवेद्य राजते पात्रे यथाशक्तिविनिर्मिते ॥ ७३ ॥
पात्राभावाच्च रजतं स्वल्पमात्रं न लोपयेत् ।
पश्चात्तद्द्रव्यपूतं मधुपर्कादिकन्तु वै ॥ ७४ ॥
प्रतिपाद्य गुरौ भक्त्या प्रसन्नेनान्तरात्मना ।
यवान्नं व्रीहिजं त्वादौ समश्नीया द्घृतान्वितम् ॥ ७५ ॥
ततः प्रभृति कालाच्च प्रत्यहं केशवस्यतु ।
स्थानद्वये निविष्टस्य पूजनंच समाचरेत ॥ ७६ ॥

प्राग्वन्मध्ये केशवस्य देवीयुक्तस्य यत्नतः ।
ततो नारायणादीनां सदेवीनांच वैक्रमात ॥ ७७ ॥
सर्वेषां पूजनं कुर्या त्प्रादक्षिण्येन यत्नतः ।
यथा सम्भवतो भक्त्या पुष्पधूपादिकेनतु ॥ ७८ ॥
यावदभ्येति दशमी सिता पौषस्य वैतिथिः ।
ततः प्रभृतिकालाच्च प्रागुक्तविधिनाखिलम् ॥ ७९ ॥
नारायणाख्यमन्त्रेण व्रतकर्मसमापयेत ।
स मर्चये त्तु प्रथमं मध्ये कारुण्यमूर्तिगम् ॥ ८० ॥
बहिर्देवीसमेतंच प्राग्वत्स्नानादिना प्रभुम् ।
द्वादश्यां तं विधानेन केशवेन समन्वितम् ॥ ८१ ॥
किं तत्र विहितं पश्चा त्पूजनं केशवस्यच ।
दिनावसाने द्वादश्यां धूपं दत्वा क्षमापयेत् ॥ ८२ ॥
कान्तासमन्वितं देवं केशवं क्लेशनाशनम् ।
अथ दामोदरान्ताभि र्मूर्तिभिश्च समन्वितम् ॥ ८३ ॥
देवं नारायणं भक्त्या परेहनि समर्चयेत् ।
मध्ये केशवव त्पश्चा च्चक्रस्थं केशवारके ॥ ८४ ॥
केशवंच तदीये रे यजे त्कान्तासमन्वितम् ।
एवं प्रतिदिनं साव द्यावन्मासस्य सा तिथिः ॥ ८५ ॥
ततो माधव मूर्तेर्वै प्राग्वदाराधनं भवेत् ।
तदर्चने समाप्तेत्तु द्वादश्यां फाल्गुनस्यच ॥ ८६ ॥
संकर्षणं परत्वेन भावये द्वासुदेववत ।
तदाश्रितन्तु गोविन्दं मध्ये मूर्त समाह्वयेत् ॥ ८७ ॥
चक्रस्थ सह देव्यावै ततस्तं पूर्वपूर्ववत ।
रक्तचन्दन युक्तेन कुंकुमेन तथैव च ॥ ८८ ॥
पुष्पस्त्र ग्वाससा तद्व द्रक्तशाल्योदनेन च ।
सुगन्धेन फलै रक्तै र्लिप्तै र्वा रक्तधातुभि ॥ ८९ ॥

आरक्तरक्तसंसिद्धैः विद्रुमैः पुरुभूषितैः ।
सक्तूंस्तु ताम्रपात्रेतु कृत्वाथ विनिवेद्यतु ॥ ९० ॥
तदर्चनेच होमान्ते सम्पन्ने सति वै प्रति ।
याते वासत्रये चैव प्रसन्ने न्तःस्थिते च्युते ॥ ९१ ॥
गुरुमूर्तिगतो देवः पूजनीयश्च भक्तितः ।
वस्त्रै विलेपनै र्माल्यैः कटकै रंगुळीयकैः ॥ ९२ ॥
यथाशक्ति विना शाठ्यं पारणे पारणे ततः ।
प्रीणये द्वासुदेवश्च मूर्तित्रयसमन्वितम् ॥ ९३ ॥
ऐहि [कं] कान् धर्मकामा [र्थ] र्था न्मम यच्छन्तु शक्तयः ।
मोक्षविघ्नोपशमनं नित्यं कुर्वन्तु मूर्तयः ॥ ९४ ॥
सर्वदा नित्यशुद्धो यः परमात्मा परः प्रभुः ।
पतितस्य भवाम्बोधौ वासुदेवो स्तु मे गतिः ॥ ९५ ॥
कृत्वैवं प्रीणनं सम्य ग्वासुदेवस्य भक्तितः ।
तन्मूर्तित्रितयस्यापि शक्तित्रययुतस्य च ॥ ९६ ॥
अथ त्रितययुक्तस्य तृतीयस्य महात्मनः ।
सङ्कर्षणाभिधानस्य तत आरभ्य यत्नतः ॥ ९७ ॥
प्राग्व दाराधनं कुर्या त्मत्यहं मासभेदतः ।
पश्चा न्मासत्रये याते मासे ज्येष्ठस्य तद्दिने ॥ ९८ ॥
त्रिविक्रमाख्यमन्त्रेण न्यान्य स्तर्व पुरोदितम् ।
मध्यतो म्बुजगर्भस्थं प्रद्युम्नं सर्वगं स्मरेत ॥ ९९ ॥
त्रिविक्रमं तदाकारं भावयित्वा ततो यजेत् ।
अनन्तरंच संस्थाना दानीय प्रागरान्तरम् ॥ १०० ॥
यष्टव्यस्य विशेषेण त्वनुज्झिततनुः [ पुमान् ] क्रमात् ।
श्रीगण्डंच सकर्पूरं मीपरकुंकुमभावितम् ॥ १०१ ॥
पीतं विलेपनं चात्र तथा पुष्पफलादिकम् ।
पीतानां फलपुष्पाना मभा [वात् ] वे मसृणेनतु ॥ १०२ ॥

पूतेन धातुचूर्णेन रंजये त्कुंकुमेन वा ।
सघृतं हेमपात्रंच पूजान्ते विनिवेद्यच ॥ १०३ ॥
पात्राभावात् [ वे ] यथाशक्ति कांचनंच घृतोपरि ।
तत स्सम्पूजनं कुर्यात व्रतादेष्टारि पूर्ववत ॥ १०४ ॥
गोहेमवस्त्रपूर्वैस्तु यथा सन्तोष मेति सः ।
तत्पूजान्ते पारणेन द्वितीयंच जगत्पतिम् ॥ १०५ ॥
प्रीणये त्संकर्षणं च गृहीत्वा पाणिना जलम् ।
प्रणवाद्येन तेनैव मन्त्रेणा ग्रोदितेनच ॥ १०६ ॥
सनमस्केन किन्त्वत्र गति स्संकर्षणोस्तु मे ।
अथ त्रिविक्रमं देवं वामनं श्रीधरं प्रभुम् ॥ १०७ ॥
यजे न्मासत्रयं ताव द्याव त्स्या द्दशमी सिता ।
तदादि वै हृषीकेश मन्त्रेणा खिल माचरेत् ॥ १०८ ॥
परत्व मनिरुद्धस्य प्रातिचावसरे स्मरेत् ।
तदाकारं हृषीकेशं पद्मोदर गतं स्मरेत् ॥ १०९ ॥
इष्ट्वास्य विधानेन चक्रास्थं यथा पुरा ।
क्षत्राजोप चारै [ लाभै ]स्तु षट्पदा[ दै ] भैस्तुचार्चनं ॥११०॥
पुष्पौदनाम्बरैः कुर्या दभावाद [ वेचा ] ञ्जनाञ्जिना ।
पिंजरी कृत्य यत्नेन देवाय विनिवेद्यच ॥ १११ ॥
कृष्णागरु विमिश्रंच लेपनं चात्र कुंकुमं ।
धौतायसमयं पात्रं मणिभि श्चासितै श्रितम् ॥ ११२ ॥
वस्त्रैश्च चित्रितैः कृष्णैः पूजान्ते विनिवेद्यच ।
सम्य क्तदर्चनं कृत्वा यथा सम्पत्ति भक्तितः ॥ ११३ ॥
तृतीयं प्रीणये त्प्राग्व त्प्रद्युम्नो मेस्तु वैगतिः ।
ततो मासानुमासंच हृषीकेशा दनन्तरम् ॥ ११४ ॥
पद्मनाभं समभ्यर्च्य ततो दामोदरन्तुवै ।
गते मासत्रये ह्येवं सम्प्राप्य पुनरेवहि ॥ ११५ ॥

दशमीं मार्गशीर्षस्य तदा कर्मणि कर्मणि।
चतुर्षु चातुरात्मीयं मन्त्राणां विनियोज्यच ॥ ११६ ॥
चतुर्मूर्त्यभिधानंच समालभ्यं यजेच्च तत्।
कर्णिकोपरि पत्रेषु प्रागादि हृदयादिकम् ॥ ११७ ॥
विदिक्ष्वस्त्रं विभोरग्रे नेत्रं वै केसराणिच [श्रितं]।
अत्रान्तरे तत स्त्वेस्वे दशद्वौ केशवादिकान् ॥ ११८ ॥
चतुर्वर्णैस्तु कुसुमै स्तथा वस्त्रानुलेपनैः।
तद्वद्रस्यैश्च नैवेद्यैः पानकैः पावनैः फलैः ॥ ११९ ॥
अथान्यै र्विविधै र्भोगैः ध्वजाद्यैश्चापि वाहनैः।
मात्राभि स्सहिरण्याभि स्ताम्बूलेनात्मना ततः ॥ १२० ॥
तर्पये द्वह्निमध्यस्थं मन्त्रग्रामं यथोदितम्।
ततोर्चनं गुरोः कुर्या द्विशेषेण पुरोदितम् ॥ १२१ ॥
ब्राह्मणान्भोजये स्पश्चा त्तेभ्यो दद्याच्च दक्षिणाम्।
प्रीणनंच पठे त्प्राग्व दनिरुद्धोस्तु मे गतिः ॥ १२२ ॥
ततः पूर्णाहुतिं दद्या त्पश्चादिद मुदाहरेत्।
व्रतोत्तमेना नेनाद्य मया भक्त्याकृतेनच ॥ १२३ ॥
चत्वारो वासुदेवाद्या मूर्तय श्शक्तिभि स्सह।
प्रयान्तु प्रीति मतुलां दिशन्तु भविनो ऽभयम् ॥ १२४ ॥
धन्यं व्रत मिदं पुण्यं संसाराध्व निवर्तनम्।
अल्पक्लेशमसम्पूर्ग मनन्तफलदं नृणाम् ॥ १२५ ॥
ना वसाद स्सवतः कार्य एतदाचरणे तु वै।
यथो पसवृनैः कार्य मधमै र्मध्यमै र्जनैः ॥ १२६ ॥
अशाक्येन यथाशक्ति त्वारण्यैः कुसुमादिकैः।
अद्भि र्दूर्वांकुरैः पत्रै र्जप जागरणादिना ॥ १२७ ॥
दीपेना भ्युक्षणेनैव मार्जनेनो पलेपनैः।
व्रीहीन् सस्तू नयाम्यंच तिला न्यन्नान्यथा हरेत् ॥ १२८ ॥

संवत्सरस्य पूजार्थं दानार्थं प्राशनायच ।
पूर्वं मासत्रयं दध्ना व्रीही न्वै विनिवेद्यच ॥ १२९ ॥
द्वादश्यां भोजना त्पूर्वं हितं तत्प्राशनं सदा ।
अपरं सक्तवश्चैव तृतीयं त्रितयं घृतम् ॥ १३० ॥
तिलानां त्रितयं चान्य त्प्राशनं चैव मेव हि ।
स्या दथैकादशीपूर्णा द्वादश्याथ तया सह ॥ १३१ ॥
परे हनि तदा कुर्यात द्वादश्या मर्चनादिकम् ।
संवत्सरस्य वैमध्याद्य स्त्वेकां कर्तु मिच्छति ॥ १३२ ॥
तस्या मपि स्वमन्त्रेण कर्मपूजान्त माचरेत् ।
यथा प्राप्तैस्तु पुष्पाद्यैः प्रागुक्तांगै स्सहार्चनम् ॥ १३३ ॥
पररूपस्य मध्येतु पूजनं स्वे [ नके ] न्वगेव हि ।
केवलस्य तु तस्यैव स्वनाम्ना प्रीणनं हितम् ॥ १३४ ॥
पारणं प्रा ग्विधानेन त्वेकं भूरिफलप्रदम् ।
तस्मा द्वे त्रीणि वा कुर्या त्स्वशक्त्या श्रद्धया न्वितः ॥ १३५ ॥
नारी ह्यनन्यशरणा यथेवंहि समाचरेत ।
निस्स्वामिका वानुज्ञाता पत्या साप्नुयाच्च तत् ॥ १३६ ॥
अथापवर्गदं वक्ष्ये चातुर्मास्यं व्रतोत्तमम् ।
यत्कृत्वा भिमता न्कामा न्निहैव लभते नरः ॥ १३७ ॥
गृह मासाद्य निर्बाधं देशे वा जननाकुले ।
यथाविभवविस्तीर्ण तुर्याश्रं वा यथायतम् ॥ १३८ ॥
धूमनिर्गमनोपेतं गवाक्षगणभूषितम् ।
इष्टकाद्यै श्चितं कुर्या त्तन्मध्ये पिण्डि [ ता ] कात्रयम् ॥ १३९ ॥
चतुरश्रंच विच्छिन्नं भूमेः किञ्चि त्समुन्नतम् ।
ततो दक्षिणदिग्वेदे रूर्ध्वे कुण्डन्तु पूर्ववत् ॥ १४० ॥
मध्ये चन्दनमिश्रेण रोचना कुंकुमेन च ।
गोक्षीरमर्दितेनैव मासि मासि लिखे च्छुभम् ॥ १४१ ॥

चक्रे षट्पत्रगर्भन्तु स्नानपीठ मुदग्दिशि ।
तत स्त्वाषाढमासस्य दशम्या मुदितेन्दुना ॥ १४२ ॥
वासुदेवाख्यमन्त्रेण तोय मादाय पाणिना ।
भगवन्पुण्डरीकाक्ष सर्वभूतपते ऽच्युत ॥ १४३ ॥
व्रतं मे त्वत्प्रसादेन निष्पद्य तु तवाप्तये ।
ततो र्चये द्वासुदेवं द्वादश्यां कमलोदरे ॥ १४४ ॥
प्रागादावथ पत्राणां त्रयं संकर्षणादिकम् ।
प्रादक्षिण्येन विन्यस्य यावद्रक्षः पदच्छदम् ॥ १४५ ॥
ईशानपद् पत्राद्या प्यनिरुद्धादिकत्रयम् ।
अप्ययेन तु सम्पूज्य याव त्पश्चिम दिग्दळम् ॥ १४६ ॥
भूतावासं पुनर्मध्ये तत श्चक्रारकेषु च ।
क्रमेण पूर्वा दारभ्य न्यासं पूजनमाचरेत् ॥ १४७ ॥
वामनं चाथ तद्देवी भूमन्तंच तत श्शिरः ।
श्रीधर स्त्वथ तत्कान्ता शिखाकवचमेवच ॥ १४८ ॥
हृषीकेशश्च तत्पत्नी ह्यस्त्रं तदनु लोचनम् ।
ध्यानं स्नानं तथा पूजां होमं जपसमन्वितम् ॥ १४९ ॥
क्रमेणानेन सर्वेषां सर्वदैव समाचरेत् ।
द्वादश्यां श्रवणस्याथ मध्ये संकर्षणं यजेत् ॥ १५० ॥
तत्पत्राभ्यां वासुदेवं चक्रारेष्वथपूर्ववत् ।
तृतीयं पद्मनाभाद्यं तथा देवी हृदादियत् ॥ १५१ ॥
ततो नभस्य द्वादश्यां प्रद्युम्नः कर्णिकागतः ।
आद्यस्तत्पत्रगो ऽराणां त्रय नारायणादिकं ॥ १५२ ॥
देव्यश्चैवांगषट्कंतु पूर्ववच्चारकान्तरे ।
ततस्तदग्र द्वादश्या मनिरुद्धं यथापुरं ॥ १५३ ॥
पत्रयुग्मे तदाद्येतु चादिदेवं यजेत्क्रमात् ।
त्रिविक्रमान्तं विष्ण्वाद्य शक्तिरंगान्यथादिवत् ॥ १५४ ॥

तत्रा खिले मन्त्रवरैः कर्म निश्शेष माचरेत् ।
द्वादश्यां पूर्ववन्मध्ये षडङ्गन्तुलयरूपधृक् ॥ १५५ ॥
मूर्तयोऽरान्तरस्थाश्च नेमिस्था देवतागणाः ।
पूजाहोमो विशेषेण पूर्णान्तं पूर्वचोदितम् ॥१५६॥
इत्येतत्सविशेषंच व्रतमुक्तं समासतः ।
यत्कृत्वा पुनरप्यत्र जायते न पुनर्भवे ॥१५७॥

इति श्रीपाञ्चरात्रे श्री सात्वतसंहितायाम्
संवत्सरविधि नाम
अष्टमः परिच्छेदः ॥८॥

---

## अथ नवमः परिच्छेदः ।

---

श्रीनारदः ।

अथत्वाङ्गलिनादेव श्रकम्पू वपरिचोदितः ।
यत्तच्छृणुत विप्रेन्द्राः कथ्यमानं मयाधुना ॥ १ ॥

संकर्षणः ।

सूक्ष्मव्यूह विभागेन स्वबाह्याभ्यन्तरंहितत् ।
परस्य ब्रह्मण स्तस्य ज्ञातमाराधनंमया ॥ २ ॥
इदानीं श्रोतुमिच्छामि विभोस्त्वद्विभवात्मनः ।
आराधनं यथायद्य भविनामीप्सितप्रदं ॥ ३ ॥

भगवान् ।

वैभवीयो महाबुद्धे देवतानिचयोमहान् ।
यवदतस्ते मयापूर्वं मेकैकं विद्धि तत्त्रिधा ॥ ४ ॥

चतुर्णां युगसन्धीनां युगानाञ्च तथैवहि ।
विश्वविप्लव दोषाणां विनाशाय चतुर्व्रतं ॥ ५ ॥
सितरक्तादिरूपेण ज्वलदस्त्र करांकितं ।
कार्यारम्भे तथामध्ये ह्यवसानेतु सर्वदा ॥ ६ ॥
सन्धत्ते रूपमात्मीय मेकएव ह्यनेकधा ।
श्रेयसेसर्वलोकानां स्थूलवाकामरूपधृत् ॥ ७ ॥
मनुष्येणवपुषा कुन्देन्दुधवलेनच ।
वीरासनादिनाचैव स्थितस्मुदितमानसं ॥ ८ ॥
लीलाविधृतसर्वाङ्गं सौम्यवक्त्रमनाकुलं ।
धियादोषगणंसर्वं ध्वंसयन्तंच मोक्षिणां ॥ ९ ॥
तद्व्यक्तं शान्तसंज्ञंच रूपंरूपवतांवरं ।
प्रकाशयतिसन्मार्गं समाधिनिरतात्मनां ॥ १० ॥
तेजोमयं यत्तद्रूपं वैभवं शान्तसंज्ञकं ।
उपासकानां भक्तानां सर्वसर्वफलप्रदाः ॥ ११ ॥
आमोक्षात्त्रिर्विचारेण त्वेकैवस्य महामते ।
आराधनार्थविहितो वाचकोहि चतुर्विधः ॥ १२ ॥
संज्ञानानापदमयः पिण्डाख्यो बीजलक्षणः ।
एभ्योमध्यात्त्वथैकेन वाच्यमामन्त्रयभवितः १३॥
यत्रैकपिण्डवाक्योत्थ मन्त्रेणाथो भयात्मना ।
अभिन्नलक्षणोवाच्य एकएवोपचर्यते ॥१४॥
तत्रवैविधिनानेन कुर्यात्ताभ्यां हिकल्पनां ।
कृत्वादौनाममन्त्रस्य बीजं पिण्डाक्षरन्तुना ॥१५॥
नयेत्तेनाभिमुख्यत्व वाच्यमाद्यन्तगेनवा ।
सतन्त्रचपदमन्त्रन्तु विधिनानेनवैततः ॥ १६ ॥
कुर्यात्प्रणवपीठार्थं नमस्कारध्वजान्वितम् ।
आभ्यां शान्तस्वरूपात्वा देवाद मत एव हि ॥ १७ ॥

संज्ञाख्यं पदमन्त्रं च विद्धि संसिद्धिकृद्यानम् ।
स्व [ स्वा ] रोत्थं व्यञ्जनोत्थं वा बीजमेकाक्षरं स्मृतम् ॥१८॥
स्वरव्यञ्जनसंयोगा द्वहुर्णः पिण्डमन्त्रराट् ।
द्वाभ्यां मात्रा तथान्ताद्य स्वरवर्गात् महामते ॥ १९ ॥
स्वरूपेण हि मन्त्रत्व मन्येषां सह बिन्दुना ।
स्वरेणैकेन युक्तस्य स्वरयुग्मान्वितस्य वा ॥ २० ॥
सानुस्वारस्य बीजत्वं व्यंजनस्यापि चाङ्गलिन् ।
य ॐकार इयशब्दस्य विपसौ दीधितिप्रभः ॥ २१ ॥
विलक्षण रतया [ ना ] कारो विद्धि तद्वाचक त्रिधा ।
क्वचि पिण्डं क्वचि द्वीजं क्वचि च्छन्द मनाहतम् ॥ २२ ॥
तस्य चोद्बोदमानस्य परिणाम स्स्फुटो हि यः ।
बह्वक्षरो बहुपद स्स्तुतिसम्बोधलक्षणः ॥ २३॥
अविनाशी स ॐकारो बीजादीनां महद्धिदः ।
प्राग्द [वि] वा स्मरणेनातः सत्याख्येना सनं [सिद्ध]महत् ॥२४॥
तस्मा द्वे सायभिन्नन्तु रूपं तदुपरि न्यसेत् ।
स्वविवर्तेन बीजस्य मृत्युस्थानं प्रकल्पयेत् ॥ २५ ॥
प्राप्ते ज्यापसरे नित्यं सम्पन्ने यजने सति ।
दत्तोपलो फलं यद्व सद्व स्मदितयं स्मरेत् ॥ २६ ॥
भानुमत्तयसंकोच स्तुल्य मेत न्महामते ।
क्रियावशात्तु क्रिंतवत्र भेदमात्रोपलक्षणम् ॥ २७ ॥
न यत्र बीजं पिण्ड वा तत्र वै प्रणवादतु ।
आ त्वर्ण पदमन्त्रस्य यत्तदालोकवाचकम् ॥ २८ ॥
तच्छिद्र वि [ धवि ] प्रद्वं वर्णे स्तस्मा दुद्धाप्य वृक्षवत् ।
केवलं यत्र वै बीज पिण्ड वा पदवर्जितम् ॥ २९ ॥

तत्राकाराख्यवर्णस्य क्षेत्रज्ञत्व विधीयते ।
क्षेत्रत्व मवशिष्टानां वर्णानां पिण्डरूपिणाम् ॥ ३० ॥
पेयत्वस्य हि बीजस्य स्वस्थिति र्भेदा वर्ण [जि] ता ।
स्वभावस्यमृति र्बीजे बीजोद्धार स्तथाकृतिः ॥ ३१ ॥
बीजत्व पिण्डमन्त्राणां परिज्ञेय स्सदोदयः ।
य द्बीजलक्षण मन्त्रं स्वाराध्यं [ सामर्थ्य ] वैष्णवं महत् ॥३२॥
अक्षरेणैव सर्वरूपाणां मन्त्राणां भिन्नरूपिणाम् ।
तद्यथार्थपरिज्ञाना ज्जपाद्ध्याना त्समर्चनात् ॥ ३३ ॥
इष्टना त्सम्प्रदायात्त निर्बीजं पद मृच्छति ।
सर्वाभिमतसिद्धि स्स्या त्साधकस्य सदैव हि ॥ ३४ ॥
पिण्डादि भ [ भं ] गवन्मन्त्र मूर्तीनामेव मेवहि ।
परिज्ञाना द्ध्येय ब्बिन्दु पिण्डा नास्थैर्य मुत्तमम् ॥ ३५ ॥
नानारूपं नाममन्त्राच्च नानालोकान्तरो स्थितम् ।
भवे त्सर्वपद प्राप्तिः परिज्ञाना त्पदाभिधात् ॥ ३६ ॥
सबीजवा त्पिण्डं वा मन्त्राणां यत्पर द्रुपम् ।
विद्यातिपद स्व स्व चिन्तया च भावयेत्परम् [ द् ] ॥ ३७ ॥
मन्त्रक्षेत्रज्ञ रूपास्य यस्मा त्सर्वेश्वरो ऽच्युतः ।
व्याप्य व्यापकरूपेण वर्तते ऽनुग्रहेच्छया ॥ ३८ ॥
व्याप्यरूपेण भूलोका द्भोगा दारभ्य चाखिलात् ।
षाड्गुण्यमहिमान्त [ मिमान ] श्च ददाति फलमुत्तमम् ॥ ३९ ॥
स्वपद भोगखिन्नस्य दिव्यदेहस्य कर्मिण ।
क्षेत्रज्ञ बीजपिण्डात्मा निरावरण लक्षणः ॥ ४० ॥
ज्ञान यदमलं शु [ चि ] द्ध संयच्छत्याप्त लाभदम् ।
शक्तिव्यक्ति मयत्व च जाग्रद्वृत्ते परात्मन. ॥ ४१ ॥
एव सज्ज्ञात्मन स्स्वप्न वृत्ते रेकत्व मस्ति च ।
सुषुप्तिवृत्ते. पिण्डाख्य मन्त्रस्यैव महामते ॥ ४२ ॥

श्रीमात्मन स्सस्यमूर्ते श्शक्तिव्यक्तिरव मस्तिवै ।
व्यक्तिज्ञान यदोपेसा नियता यद्यपि स्मृता ॥ ४३ ॥
भगव न्मन्त्रमूर्तीनां तथापि परमात्मन ।
आद्यस्य चातुरात्म्यस्य केवलस्या घचा विभोः ॥ ४४ ॥
चतुष्प्रकार यन्मन्त्र विद्धि तन्मोक्ष भूतिदम् ।
अतो न्यथा यदुद्दिष्ट ममिश्र मिश्रमेवाद्दि ॥ ४५ ॥
फऊ भागवशा चैव स तथा विद्धि नान्यथा ।
ज्ञात्वैव मर्चये त्पश्चा ज्ञानामन्दै मंद्दामते ॥ ४६ ॥
गौणमुख्यादि [ ति ] गुणैस्तु प्रादुर्भावगण विभो. ।
महाज्योति स्स्वरूपस्य सद्दैव चतुरात्मना ॥ ४७ ॥
प्राग्जाग्र त्पदसस्यस्य ह्येतेनोक्त तदर्चनम् ।
इदानीं र विशषेण मन्त्राधान क्रियान्वितम् ॥ ४८ ॥
प्रवक्ष्यामि समासेन श्रुणुष्वायत लोचन ।
विशारदरूपो भगवान् स्वय विश्वविलक्षणा ॥ ४९ ॥
अध्यक्षेण स्वरूपेण समुदेत्यक्पवाद्द ।
मद्दिमानन्तु निश्शेष शुद्धसंविद्वपुरस्सरम् ॥ ५० ॥
भाजायाद्यप [ दार्थ ] दस्यस्य चातुरात्म्यस्य वै विभोः ।
यथाचाधारभूविश्लियाचासारभूमि छ देवाना चेष्टित हि तत् ॥५१॥
सितादयः कान्तयोपत् श्रयादिकश्च महामते ।
स लाञ्छन वैभवीय सायुध चोत्पमेवतु ॥ ५२ ॥
ज्ञानाद्य गुण षट्कश्च तदुक्ता ज्ञातयो त्विरा ।
अगिमा ष्टक चैव स्थित्युत्पत्ति दया दया ॥ ५३ ॥
शक्ति स्सा चातुरात्मीया त्वै श्वरी त्वभिधायते ।
यथार्क किरण ग्राम नयंतवा तेज कणो महान् ॥ ५४ ॥
स्व कारण विना सर्व मा पूरयति गोचरम् ।
स्वातन्त्र्या त्परिपूर्णत्वा त्तद्वत्त परमेश्वर. ॥ ५५ ॥

विहाय यक्षुदेवाख्यं मूर्तिशाखाचतुष्टयम् ।
विभवीयस्य यूथस्य पतिरेवा वतिष्ठते ॥ ५६ ॥
सृष्टि स्थिति संहार भोग कैवल्य लक्षणम् ।
भेदयन्वै धिया चक्रं पंचार मिद मुत्तमम् ॥ ५७ ॥
स्मर्तव्य स्स्वपदस्थ स्स्व बीजेन स्वामदात्मना ।
आमूर्ध्नो निवर्थनां तदीयं गात्र मण्डलम् ॥ ५८ ॥
स्वस्य द्वैभवीपैन्तु बीजे भोक्ष्य मलंकृतम् ।
क्रमा दुत्तार्गमाणे स्वै स्मृतौधिन पूर्ववत् ॥ ५९ ॥
पूजना त्परमेशस्य मन्त्रिरा द्वैव गच्छति ।
शृणुतद्बीज निचयं सावधानेन चेतसा ॥ ६० ॥
यत्प्रसादा त्परां सिद्धिं प्रयान्ति भगवन्मयाः ।
शुचौ देशे मनोज्ञे च सुलिते पुष्प भूषिते ॥ ६१ ॥
चन्दनक्षोद संयुक्ते धूपेना धिवासिते ।
विलिख्यमातृका चक्रं भेदे नानेन वै पुनः ॥ ६२ ॥
येन सन्दृष्ट मात्रेण शतधायाति पल्मषम् ।
मागादौ पंचवर्गान्तं मध्यान्तं मध्यतो लिखेत् ॥ ६३ ॥
यादयो नव नाभिस्था आदय ष्षोडशारगाः ।
कादयो नेमिगा स्सर्वे पूर्वचक्रे यदक्षरम् ॥ ६४ ॥
तदस्मि न्नधि भूतन्तु पूजये द्विधिना ततः ।
शब्दब्रह्म मयं चक्र मर्घ्यै पुष्पादिकैः क्रमात् ॥ ६५ ॥
तन्मध्या दुद्धरेदादौ सर्वेषां कारणं हि यत् ।
तदक्षर मक्षरं चाक्षा दवान्तावेन भूषितम् ॥ ६६ ॥
विद्धि सर्वेश्वरस्येदं बीजं निर्बीज कारणम् ।
एतदेवाब्ज नाभस्य विसर्ग सहितं स्मृतम् ॥ ६७ ॥

नेमिवर्णा द्वितीयं वै ततोरा त्पष्ट मक्षरम् ।
अष्टमं नाभि देशाच्च तात्संख्यं नेमि मण्डलात् ॥ ६८ ॥
नेमिपूर्व मतोनाभे स्सप्तमं पंचमारगम् ।
अरा च्चतुर्दशं त्वक्षा त्पश्चिमाशा गतं हि यत् ॥ ६९ ॥
नेमे रेकादशं चाथ षोडशंच त्रयोदशं ।
पंचमं नाभिदेशाच्च नेमे रेकोन विंशकम् ॥ ७० ॥
तदन्तं सप्तमं चैव नवमं हि महामते ।
नाभे र्द्वितीयं तदनु नेमे स्तत्संख्य मेवच ॥ ७१ ॥
द्वादशंच यदिष्टेभ्यो दशमं षोडशा त्परम् ।
नाभिपूर्व ततो वर्ण नेमेः पंचदशं हियत् ॥ ७२ ॥
तुर्यसंख्य मराद्बीजं ततो नाभि चतुर्थकम् ।
षष्ठं नेमे श्चतुर्थञ्च मध्यम [ मा ] क्षा त्तथा हरेत् ॥ ७३ ॥
सप्तैव पूर्वदिक्स्थंय द्वाद्या द्वै पंचमं ततः ।
अक्षा द्दक्षिणदिक्संस्थं नेमेरष्टादशं ततः ॥ ७४ ॥
द्वितीयंनाभि देशाच्च तदन्ते सप्तमारगम् ।
चतुर्दश मथोनेमे ष्पष्ठंनाभे रथा हरेत ॥ ७५ ॥
सर्वे कारणव न्मूर्ध्ना योजनीया स्सबिन्दुकाः ।
प्रणवाद्यानमोन्ताश्च तेजसालीव निर्भराः ॥ ७६ ॥
पद्मनाभादयो देवा वाच्या स्तेषां क्रमेणतु ।
पद्मनाभो ध्रुवोनन्त श्शक्त्यात्मा मधुसूदनः ॥ ७७ ॥
विद्याधिदेवः कपिलो विश्वरूपो विहंगमः ।
क्रोडात्मा बडबावक्त्रो धर्मो वागीश्वर स्तथा ॥ ७८ ॥
देव एकार्णवशयः कूर्मःपातालधारकः ।
वराहो नरसिंहश्चा प्यमृता हरणस्तुवे ॥ ७९ ॥
श्रीपति र्दिव्यदेहोथ कान्तात्मा मृतधारकः ।
राहुजित्कालनेमिघ्नः पारिजातहरोमहान् ॥ ८० ॥

लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोध शायी भगवा नेकश्रृंगतनुस्ततः ॥ ८१ ॥
देवोवामनदेहस्तु सर्वव्यापीत्रिविक्रमः ।
नरोनारायण [ नारायणोनर ] श्चैव हरिः कृष्णस्तथैवच ॥८२॥
ज्वलत्परशु भृग्रामो रामश्चान्यो धनुर्धरः ।
वेदविद्भगवान् कल्की पाताळ शयनःप्रभु. ॥ ८३ ॥
प्रादुर्भाव गणोमुख्य इत्युक्तस्ते समासतः ।
शक्तिसङ्घ प्रधानोय श्शक्तिसङ्घ स्सउच्यते ॥ ८४ ॥
लक्ष्मीः पुष्टिर्दयानिद्रा क्षमाकान्ति स्सरस्वती ।
धृतिर्मैत्री रतिस्तुष्टि र्मतिर्द्वादशमीस्मृता ॥ ८५ ॥
प्रधानभूतां श्शागीरा नळंकाराञ्छि बोधमे ।
किरीटः कौस्तुभोभाम्यः ? श्रीवत्सो भूतलक्षणः ॥ ८६ ॥
वनमालेतिगरुडः प्रधानान् हेतिकान् शृणु ।
चक्र शङ्खो गदापद्म लाङ्गलं मुसलंशरः ॥ ८७ ॥
शार्ङ्गश्च खड्गखेटौतु दण्डः परशुरी रितः [ तिहा ] ।
पाशाङ्कुशौ मुद्गरश्च वज्रश्शक्ति समन्वितः ॥ ८८ ॥
इत्येत द्देवताचक्र मङ्गमन्त्रगणान्वितं ।
विग्रहेदेवदेवस्य स्थलीनमवतिष्ठते ॥ ८९ ॥
सर्वेभावोपकरणं 'गीर्वाणगणमुत्तमं ।
नानाविभव मूर्तीनां योवातिष्ठेत शासने ॥९०॥
कालोवियन्नियन्ताच शास्त्रं नानाङ्ग लक्षणं ।
विद्या भि 'तयश्चैव समुद्रास्सगणा श्शिवाः ॥ ९१ ॥
प्रजापति समूहश्च इन्द्र स्सपरिवारक. ।
मुनय सप्तपूर्वेन्ये महास्तारादिकैर्वृताः ॥ ९२ ॥
जीमूताश्चा खिलानागा स्त्वप्सरोगण उत्तमः ।
भाषण्यश्चैव पशवो यज्ञास्साङ्गा खिलाश्चये ॥९३॥

विद्याचैवा पराविद्या पावकश्चैवमारुतः ।
चन्द्रार्कौ वारिवसुधे इत्युक्तममलेक्षण ॥९४॥
चतुर्विंशतिसंख्यश्च भवोपकरणं महत् ।
भवस्साक्षात्प्रधानन्तु व्यापकोजडलक्षणः ॥९५॥
मन्त्रमन्त्रेश्वरन्यासा स्सोपिपूज्यस्व मेतिच ।
इत्येवमादि सर्वेषां भविनां परमेश्वरः ॥९६॥
स्थितोन्तर्यामिभावेन रूपमासाद्य निष्कळं ।
आप्तकामस्सभगवान् स्वव्यापारवशेनतु ॥९७॥
स्वांशक्तिमवलंब्यास्ते पद्मनाभात्मना पुनः ।
धराम्बुहुतभुग्वात मूलनाळदळोदरे ॥९८॥
चतुस्त्रयमयेपद्मे गगनैकार्णवोदरे ।
मानसे ऽ नन्तशयने दिव्यबोधतनुर्विभुः ॥९९॥
सहस्रांशु सहस्राभ उत्तानस्थोहिलीलया ।
ततो विविधरत्नाभे तदीये नाभि पुष्करे ॥१००॥
मोद्गहंस्तु स्ववीर्येण विद्यांसामर्थ्य विग्रहाम् ।
मूर्तैर्ध्वजादिकैस्सर्वै रावृतस्तत्परायणैः ॥१०१॥
अनन्तचेष्टस्यविभो रित्येवं त्वीश्वरात्मनः ।
भोगापवर्गदं रूपं शान्तव्यक्तंच वैभवम् ॥१०२॥
प्रागवत्तुर्यपदादस्थं स्मरेद्धृत्कमलाम्बरे ।
तदधःकर्णिकामध्ये त्वभिजातो [ शान्तो ] पलद्युतिम् ॥१०३॥
दिशोदश द्योतयन्तं नानागात्रस्तदैश्रितम् ।
सौम्यंद्विरष्टवर्षंच राजीवदळलोचनम् ॥१०४॥
भ [ भा ] चक्र चक्रयुग्दे [ हृद्दे ] वं गदा देहं [ हारं ] तथैवच ।
शक्ति माधार संज्ञांच मोद्वहन्तं स्मरेद्ध्रुवम् ॥१०५॥

स्थितोपस्तम्भभूतस्तु अस्मिन्वै विश्वमन्दिरे ।
नभोनिळात्मनाचैव भूमिका भिन्नलक्षणे ॥१०६॥
मागादग्नीशकोणान्तं उंसरे स्कर्णिकोपरि ।
द्विपट्कं यदनन्ताद्यं वरशायन्त मग्निगम् ॥१०७॥
तार्क्ष्यं केसरोर्ध्वस्थं तद्व त्कूर्मादिकं न्यसेत ।
न्यग्रोधशायिपर्यन्त ममृताधारमण्डले ॥ १०८ ॥
सूर्यचन्द्र [क्र] समारूढं दळभूमिगमं [तं] ततः ।
पाताळशायिपर्यन्त मेकशृंगादिकं हिं यत् ॥ १०९ ॥
न्यस्यैव ममृतोर्ध्वैस्तु भोगै रभ्यर्च्य मानसैः ।
यथावद्ध्यानयोगेन प्राग्व त्सृष्टिक्रमेण तु ॥ ११० ॥
पुन स्संहृतियोगेन पाताळशयना नु वै ।
यावद्गगनशायंत मर्चनीयं फलाप्तये ॥ १११ ॥
य उक्त स्समुदायो स्मिन् हृयागे देवतागणः ।
यजे द्विन्नक्रमेणैव विधिना तेन तं पुनः ॥ ११२ ॥
त्रिकं [ त्रयं ] यद्वै द्विपट्कानां त्रिस्थानस्थं प्रकाशितम् ।
पृथ क्पृथ क्तदेकैकं न्यस्य न्यस्य यजे त्क्रमात् ॥ ११३ ॥
प्रतिद्वादशकस्याद्यः प्रागुक्तेन क्रमेण यः ।
तं निष्कळात्मना पूर्व मिष्ट्वा वै कर्णिकोदरे ॥ ११४ ॥
समुत्थाप्य ततो मध्या त्तमेव सकळात्मना ।
न्यस्ये दाधारभूतश्च सर्वत्र कमला दधः ॥ ११५ ॥
तमेवार्घ्यादिना ऽभ्यर्च्य कमलच्छदकोटिगम् ।
द्वितीयं कर्णिकामध्ये तदग्रे केसरोर्ध्वगम् ॥ ११६ ॥
ध्यात्वा न्यस्य तृतीयन्तु ततः पत्राष्टकेष्टकम् ।
द्वादशाख्यादि सर्वत्र गगने पद्मनाभवत् ॥ ११७ ॥
भवोपकरणीयाभि र्दैवताभि स्समावृतः ।
य स्वद्वदेवतासंघ स्सर्व स्स [चि] कमला द्वहि· ॥ ११८ ॥

न्यस्यैव मर्चनं कुर्या द्दिव्ये भोगि स्तु पूर्ववत् ।
मूर्तौ मण्डलमध्येस यदि रम्यौ जलाशये ॥ ११९ ॥
स्वमन्त्रेणाम्बरस्थस्य गुर्त स्रक्चन्दनादिकम् ।
दातव्यं कर्णिकामध्ये न्यस्तमन्त्रस्य मूर्धनि ॥ १२० ॥
प्रतिबिम्बति तद्यस्मा त्तद्रूपाद्वारदर्पणे ।
यस्य यस्य यदा यस्मि न्नाकारे रमते मनः ॥ १२१ ॥
भोगाप्तये वा मोक्षार्थं तं तं मध्ये ऽर्चयेत् तदा ।
तदुद्देशेर्चनं कुर्या त्तत्स्थानमच्युतस्य वा ॥ १२२ ॥
नानासिद्धिप्रदानाच्च सह संहारमूर्तिना ।
एव मेवांगमन्त्राणा मर्चना दीप्सितं लभेत् ॥ १२३ ॥
तत्रायं हि विशेष स्स्या द्विन्यासे तन्निबोध मे ।
भूलोकाखिलसिद्धीना माप्तये ताव दुच्यते ॥ १२४ ॥
प्राग्वद्द्वादशकाद न्या [ न्या ] देकम्रूग मपो यजेत् ।
श्राव्यं यदंगमन्त्रन्तु कर्णिकायां न्यसे त्ततः ॥ १२५ ॥
अथ केसरकोटिस्थं स्मरे त्तत्पुरतो परम् ।
पश्चा द्दला त्क्रमांतस्थं दळाग्रस्थं द्विरष्टकम् ॥ १२६ ॥
पाताळ शायिनं [ शयनं ] मध्ये मन्त्रस्योपरि पूर्ववत् ।
ध्यायेत् निश्शेषपाताळसिद्धीना माळयं परम् ॥ १२७ ॥
तच्छक्त्यनुगृहीतस्तु मन्त्रेशः कर्णिकागतः ।
समस्तसिद्धिदाने स्या दाश्रितस्यांगसंज्ञकः ॥ १२८ ॥
एव मेव भुव र्लोकसिद्धीनां प्राप्तये सदा ।
स्मर्य ऊर्ध्वे सरश्शायी त्वनन्तः कमला दधः ॥ १२९ ॥
यजे द्गगनसिद्धीना मशेषाणा मथाप्तये ।
खस्थंन्यग्रोधशयनं कूर्म कमलमूलगम् ॥ १३० ॥

एते पाम पि संचारो नानासिद्ध्यपेक्षया ।
प्रधानमन्त्रव त्कुर्या त्माग्व त्सर्वत्र सर्वदा ॥ १३१ ॥
एव माद्यैस्तु विविध द्रोगै र्नानाविधोत्थितैः ।
यः स्थित स्त्रिविधे सर्गे विभवः पारमेश्वरः ॥ १३२ ॥
पौष्कराख्ये च वाराहे प्राजापत्ये महामते ।
सूक्ष्मत्वेन च निश्शेषं प्रत्येकस्मि न्हि वर्तते ॥ १३३ ॥
समाश्रित्य बृहत्त्वं च तृतीयांशेन तिष्ठति ।
यथोक्तक्रमयोगेन युक्त स्त्वर्गत्रयेतु वै ॥ १३४ ॥
परिवारं समादाय भवोपकरणान्वितम् ।
दिक्पालकगणोपेतं समाक्रम्य तमेव हि ॥ १३५ ॥
अभिधानाक्षरं पूर्व मरान्तायेन भूषितम् ।
योक्तव्य मभिधानेन पूर्वोद्दिष्टेन वर्त्मना ॥ १३६ ॥
पूजार्थं चैव सर्वेषां क्रमे स्मिन् सम्प्रकाशितम् ॥ १३६ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
विभवदेवतान्तर्यागो नाम

नवमः परिच्छेदः ॥ ९ ॥

---

## अथ दशमः परिच्छेदः ।

---

नारदः ।

अथव्लाङ्छनाविभा श्चोदित परमेश्वरः ।
यत्तदाकर्ण्यतामद्य चेतसा संयतेनतु ॥१॥

सङ्कर्षणः ।

मण्डलेग्नौ बाह्निनाथ जलमध्ये त्वयार्चनं ।
नोक्तं विभवदेवानां व्यक्तं कृत्वा तदादिश ॥ २ ॥

भगवान् ।

सुलक्षणेतु भूभागे समेपूर्वो क्तलक्षणे [ सम्प्लवे ] ।
तत्रमण्डल [ प ] मालेख्यं सर्वेषामेकमर्चने ॥३॥
चतुरश्रं चतुर्द्वारं पीठा वयवयान्वितं ।
षट्त्रिंश द्दळपद्मेन मध्यतश्चाप्यलंकृतं ॥ ४ ॥
वितानध्वजसंवीतं किंकिणीदर्पणान्विते ।
तोरणव्यजनच्छत्र चामर स्त्रग्विमण्डितं ॥५॥
उक्तानुक्तमशेषन्तु कृत्वापूर्वोक्तलक्षणं ।
ततस्तु करयोर्न्यस्य विग्रहे बीजमीश्वरं ॥ ६॥
समालम्ब्यच तादात्म्य महिमानंसु निश्चलं ।
बध्वाचवैभवीं मुद्रां स्पृशेत्सर्वांगकंतया [ था ] ॥ ७ ॥
समुच्चार्यधियासर्वं म्मन्त्रग्रामं क्रमस्थितं ।
सर्वदेवमयंदेह मेवंस्मृत्वा स्वकम्पुरा ॥८॥
अन्तश्चक्र निविष्टन्तु संस्मरे द्भद्रपीठवत् ।
मण्डलं देवताधारं चक्रमन्त्रेण तद्यजेत ॥९॥
ततस्तु सर्वमन्त्राणां विन्यासं तत्रचेतसा ।
समाचरे द्यथायोगं पुष्पदान पुरस्सरं ॥१०॥
ध्रुवात्मा भगवान्मध्ये कर्णिकाया मतःक्रमात् ।
दिक्चक्र मभिवीक्षन्तं प्राग्दळादादितोन्यसेत् ॥ ११ ॥
पाताळशायि पर्यन्त मनन्ताद्यं म्महामते ।
न्यसे न्कमळ बाह्येतु ईशा द्वह्नि पदावधि ॥१२॥

चतुष्टयं किरीटाद्यं मन्त्राणां पूर्वचोदितम् ।
तदग्दक्षिण आम्नाये पैठीपे दिक्चतुष्टये ॥ १३ ॥
हंसदपञ्चलक्ष्म्याद्यं विनिवेश्यं यथाक्रमम् ।
तत्रैवपैशाचकोणात्तु यावदापूपदावधि ॥ १४ ॥
द्वयंद्वयंक्षामाद्यंच मापन्तं सन्निवेश्यच ।
बहिः पीठस्यनिकटे चामतोपैपदत्रिरात् ॥ १५ ॥
चक्रा एकमळ पर्यन्तं चतुष्कं शाङ्गापदात् ।
वायुकोणावधेर्याव रपीठवाद्येतु योजयेत ॥ १६ ॥
सौम्ययाम्याप्य पूर्वांशा वस्थितंच द्वयंद्वयम् ।
दांगळाद्यं पश्चन्त मष्टकं तद्वदेवहि ॥ १७ ॥
याम्यसौम्याप्यपूर्वांशा गतं दया द्धतुष्टयम् ।
पाशाद्यं वज्रपर्यन्तं शक्ति कोण चतुष्टये ॥ १८ ॥
आईशकोणनिकटात पदात्तन्निकटेस्थितम् ।
प्रदक्षिण क्रमेणैव पदं याच द्वितीयकम् ॥ १९ ॥
कालादीनाश्चविन्यासः कार्यश्चानुक्रमेणतु ।
यज्ञान्ताना म्मद्दादुद्दे षोडशानां यथास्थितम् ॥ २० ॥
क्रमात्पूर्वोत्तरेकोणे न्यसेद्दक्षिणपश्चिमे ।
विद्या अविद्या द्वयं यद्वे स्वपदस्थे मिमाश्रते ॥ २१ ॥
चन्द्रादित्या वुदग्याम्ये द्वारयो र्विनिवेश्यच ।
प्रत्यग्द्वार गत न्तोयं प्राग्द्वारे सिन्यसेद्दराम् ॥ २२ ॥
चतुर्णामपकोणाना मव्यक्त म्मण्डला द्वहिः ।
सम्यजे द्भवनाम्नावै यस्मा न्नान्यो भव स्मृतः ॥२३ ॥
ततःकामात्मतत्वानां दशकं सिद्धतांगतं ।
भगवत्तुल्यसामर्थ्य सार्वज्ञ्यादि गुणैर्युतम् ॥ २४ ॥
वियुक्तं प्राकृताद्दुःखा न्नियुक्त श्चेश्वरेणतु ।
भवसन्तारकत्वेन मण्डलस्य बहिर्न्यसेत् ॥ २५ ॥

उपेन्द्रः पूर्वदिग्भागे दक्षिणेदुरतिक्रमः ।
महाहृदः पश्चिमेतु यनुरेता स्तथोत्तरे ॥ २६ ॥
न्यस्यपरतेजो धराख्यस्तु पूर्वदक्षिणमध्यगः ।
नैऋतेतु महाकर्मा त्वग्राह्यः पश्चिमोत्तरे ॥ २७ ॥
पूर्वोत्तरे वर्धमान स्साक्षी गगनगोचरे ।
आधारनिळयं नाम्ना सर्वस्याधोगतं स्मरेत् ॥ २८॥
तेषां बहि स्स्वमन्त्रेण दिक्क्रमेणतु हेतिराट् ।
स्वमरीचिगणेनैव भासयन्तं निवेश्यच ॥ २९ ॥
न्यस्यैव मर्चनं कुर्या न्मन्त्रमुद्रान्वितेन च ।
निरीक्षणादिशुद्धेन अर्घ्यस्रक्चन्दनादिना ॥ ३० ॥
यथाक्रमेणोदितानां मादिदेवं यजे ततः ।
उपरिष्टात्तु सर्वेषां स्वपदस्थन्तु पूर्ववत् ॥ ३१ ॥
प्राग्वत्सुसंस्कृते कुण्डे तत स्संस्कृत्य पावकम् ।
तन्मध्ये सर्वमन्त्राणां न्यासं कुर्याच्च यागवत ॥ ३२ ॥
माक्समित्सप्तकेनैवं तर्पये द्वै यथाक्रमम् ।
मन्त्रपूतं हि निश्शेषं हवनान्तं सकृ त्सकृत् ॥ ३३ ॥
भवन्ति सम्मुखा मन्त्रा स्साधकस्याग्निमध्यगाः ।
सन्तर्प्याथ तथा कुर्या त्सहस्रशतसंख्यया ॥ ३४ ॥
एकैकस्य तु वै होमं तिलै राज्यसमन्वितैः ।
दद्या त्पूर्णाहुतिं पश्चा त्सर्वेषां तर्पणे कृते ॥ ३५ ॥
पुन रभ्यर्चनं कुर्या देव वै मण्डलान्तरे ।
यथाक्रमेण सर्वेषां पुष्पधूपै स्तु केवलैः ॥ ३६ ॥
सकृ द्ध्यानसमेतन्तु चतुर्थान्यथवाष्टधा ।
क्रमा त्समस्तमन्त्राणां प [ पु ] रावर्तन माचरेत ॥ ३७ ॥

सुशुभेनाक्षसूत्रेण स्वके वा करपर्वभिः ।
ततोऽर्घ्यकुसुमै र्गन्धैः पूरयित्वा करांजलिम् ॥ ३८ ॥
सर्वदेवमयं मन्त्रं स्मृत्वोच्चार्य च तं क्षिपेत ।
सर्वत्र सर्वदानेन क्रमेणेष्टाच भक्तितः ॥ ३९ ॥
प्रदर्श्य सर्वमन्त्राणा मेकां मुद्रां च वैभवीम् ।
प्रणवेन सहस्रांशुसन्निभां सर्वसिद्धिदाम् ॥ ४० ॥
श्लेष्यपाणितले द्वे प्राङ्नम्रं कुर्या छताग्रणम् ।
विविश्य मन्तरीकृत्य सहांगुष्ठद्वयेन तु ॥ ४१ ॥
मणिबन्धद्वयं कुर्या त्सुलग्न मतिनिश्चलम् ।
करयुग्म सगर्भन्तु सन्धार्य स्वधियाचलम् ॥ ४२ ॥
ऊरुमध्ये निषण्णेतु कुर्याद्वै बाहुकूर्परे ।
गुप्तं कृत्वा प्रयत्नेन बन्ध मस्या स्समाचरेत् ॥ ४३ ॥
सर्वधा सर्वसिद्धीना माप्तये त्वमलेक्षण ।
तीर्थमध्ये स्वहृत्पद्मे बिम्बे वेद्यां स्थलेतु वा ॥ ४४ ॥
वह्निगर्भेतु निर्धूमे नित्य मस्मि श्चतुष्टये ।
मन्त्राणा मर्चनं कुर्या त्सिद्ध्यर्थमपि मुक्तये ॥ ४५ ॥
सजलाञ्जलिपूरै स्तु तीर्थेष हृदयाम्बुजे ।
भावनामृतजै र्भोगै र्मूर्तै रर्घ्यादिकै र्बहिः ॥ ४६ ॥
समित्सप्तकपूर्वै स्तु याज्यै र्वह्निगतं तिलैः ।
पूजयित्वा यथान्यायं प्रत्येकस्मि न्पदे क्रमात् ॥ ४७ ॥
संन्यासं संचय वापि कृत्वा सम्य क्कृतस्य वै ।
मन्त्ररूपानुकारिण्या मुद्रणीयंच मुद्रया ॥ ४८ ॥
फलार्थ मखवं येन नैति संन्यासकारिणाम् ।
फलपर्यवसान न्तु काल मागमचोदितम् ॥ ४९ ॥

भर्तुर्नो युज्यते येन सिद्धा यैं[ र्ये ]स्तु फलार्थिनाम् ।
कालानुकालमुद्राणां यो बन्धः परिचोदितः ॥ ५० ॥
उक्तप्रयोजना दन्य स्सविघ्नविनिवृत्तये ।
मुदं कर्माङ्गतत्वानां ददत्यमलयाजिनाम् ॥ ५१ ॥
द्रावयित्री च दोषाणां बाह्याभ्यन्तरचारिणाम् ।
तेन मुद्रा स्समाख्याताः कृतस्यापि च मुद्रणात् ॥ ५२ ॥
तस्मा त्स्वाभाविकं कृत्वा बद्धं वा मानसं पुरा ।
स्वेन स्वेन तु मन्त्रेण स्मरे त्मार्ग[द्व्याप्यं] सदैवहि ॥ ५३ ॥
चैतन्येनानुविद्धो य श्शाखासंघश्च यद्यपि ।
तत्रापि मन्त्रो ऽव्याप्यस्त स्तत्कार्यं सम्प्रयच्छति ॥ ५४ ॥
एवं कृते ततः कुर्या न्मन्त्राणा म्मण्डलान्तरात् ।
पूर्ववच्चोपसंहार मेकस्मिन् गगनास्थिते ॥ ५५ ॥
स्मृत्वा परात्मना तंच स्वसंविद्गगने हृदि ।
विश्रान्तं भावये द्देवं स्वभावेन समन्वितम् ॥ ५६ ॥
द्विजातेर्दत्तशिष्टस्य पुष्पपत्रादिकस्य च ।
विहित श्चाम्भसि त्यागो विष्वक्सेनार्च ने कृ [नाद्द] ते ॥ ५७ ॥
धर्तव्यं न चिरं चाग्रे यत्पुरा विनिवेदितम् ।
नैवेद्यं मन्त्रमूर्तीनां किंचित्पुष्पफलादृते ॥ ५८ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम
विभवदेवतार्चनं नाम

दशमः परिच्छेदः ॥ १० ॥

# अथ एकादशः परिच्छेदः ।

नारदः ।

श्रुत्वैव मच्युतमुखा द्वनमाली मुनीश्वराः ।
पुन स्सश्चोदयामास यदाकर्णयता च तत् ॥ १ ॥

संकर्षण. ।

यथावत् ज्ञातु मिच्छामि मण्डलध्यानलक्षणम् ।
भगवन् भयभीताना मुपकाराय तद्वद ॥ २ ॥

श्रीभगवान् ।

संसाध्य यष्टियोगेन सूत्रा [ यां ] त्पूर्वापरे पुरा ।
तद्दिग्द्वयान्तरे दद्या त्प्राग्वै सूत्रचतुष्टयम् ॥ ३ ॥
समांशेन द्विधा कृत्वा स्फुटं [ ट] मध्या त्तदं [ ततः । ] त्यच? ।
साधितेना र्धमानेन मा चमत्यकस्थेन तन्तुना ॥ ४ ॥
दक्षिणोत्तरभागाभ्यां समुत्पाद्य चतुष्पथौ ।
सूत्रं पूर्वापरसमं कृत्वा तदुपरि क्षिपेत् ॥ ५ ॥
पुन रर्धसमं दिक्षु दत्वा कोणचतुष्टयम् ।
चतुष्पथचतुष्केण नयेद्वच [ द्र ] त्किं प्रसार्य [ ध्य ] वै ॥ ६ ॥
समसूत्रचतुष्कञ्च चतुरश्रप्रसिद्धये ।
तद्विभज्या ष्टदशभि श्चतुर्दिक्षु पदै स्समैः ॥ ७ ॥
क्षिपे त्सूत्रगणं तत्र घटिका रेणु [ कण ] रञ्जितम् ।
मध्ये पद्मावाने कुर्या द्भागपङ्क्तित्रये क्रमात् ॥ ८ ॥
तद्बाह्यैः पदपङ्क्त्या तु पीठ मष्टदिगन्वितम् ।
तस्य भागचतुष्कोऽथ दिक्चतुष्कं प्रकल्प च ॥ ९ ॥

विदिक्चतुष्कं त्रिपदं पङ्क्तया पीठमदक्षिणम् ।
मदक्षिणीक्षिते वीथ्या चतुष्कं दिक्चतुष्टयात् ॥ १० ॥

चतुर्णान्तु चतुर्णान्तु पाद्या द्वाद्यं द्वयं द्वयम् ।
शोधयित्वा तु तद्वाह्या चतुष्कं द्वारसिद्धये ॥ ११ ॥

चतुष्टयं क्रमेणैव भूयो दिक्षु पदं पदम् ।
तथाह्याभ्यन्तरगतं शोधनीयं प्रयत्नतः ॥ १२ ॥

पुन स्सर्वपदाभ्यां तु पट्कं पट्के तु चान्तरात् ।
सम्मार्ज्य पूर्णशोभार्थं तत्र रक्तोत्पलाष्टकम् ॥ १३ ॥

यथा दिक्षु स्थितं कुर्यात् पूजनाय द्विजोत्तम ।
बाह्यस्थपद पार्श्वा [ पीठा ] त्तु त्रीणि त्रीणि च लोपयेत् ॥ १४ ॥

त्रयाणा मन्तरस्थं य त्पद मेकात्मतां नयेत ।
उपशोभं तु तं विद्धि कुर्यां श्रीलाञ्जभूषितम् ॥ १५ ॥

पंचकं पंचकं कोणा द्वीथी नीत्वा लयं पुरा ।
शेषैः कोणन्तु निर्वत्य सान्तरं च ततो बहिः ॥ १६ ॥

दद्या त्सूत्रत्रयंचैव मध्येथ कमलं लिखेत् ।
पट्त्रिंश द्दळसंयुक्तं तस्य लक्षण मुच्यते ॥ १७ ॥

पीठावनि समीपेतु चतुर्थांश पदात्पुरा ।
समुद्धृत्य भ्रमं कुर्या द्ब्रह्मस्थानाच्चतन्तुना ॥ १८ ॥

दिक्सूत्राणां चतुर्णांतु एकैक हि यदन्तरम् ।
कृत्वाथ षै रसमैर्भागैः पत्तसंधै विभज्यच ॥ १९ ॥

चतुर्भिर्हीनं शतं सार्धं सूत्राणां तत्र निक्षिपेत ।
सूत्रेणाष्टदळस्थं य त्तदाश्रित्याब्जपल्लवं ॥ २० ॥

कुर्या द्वाग चतुष्केण यथा तदवधारय ।
सव्यापसव्ययोरग्रे अन्तरस्य निरन्तरे ॥ २१ ॥

तयोरंश समं कुर्या द्दलाग्रादंकमन्तरे ।
तदुद्देशात्तु सूत्रेण तदंकान्तर्गतेनच ॥ २२ ॥
अर्धचन्द्र द्वयंकुर्या त्तेन सूत्रेणवैसमं ।
पुनरप्यन्तरे सूत्रं तत्सूत्राभ्यां निरोध्यच ॥ २३ ॥
पत्राग्र मानयेत्तस्मा द्वहि स्तं श्रृंगसन्निधेः ।
द्वांछपमानं दळाग्रन्तु विधिना नेन सिध्यति ॥ २४ ॥
दळाग्र ब्रह्मदेशाभ्यां तुरीयांशेनचान्तरात् ।
भ्राम्यवैकर्णिकावृत्तं द्वयंशमानेन केसरं ॥ २५ ॥
दळाग्रगांशवै मध्या द्वयोमार्थ भ्रामयेत्ततः ।
कृत्वैवं वर्णकै पूतैः पूरणीय स्महोज्ज्वलैः ॥ २६ ॥
वज्रापवितता पीतां सबीजां विद्धिकार्णिकां ।
रेखान्वितानि पत्राणि सर्वाणि सुसितानिच ॥ २७ ॥
केसर त्रितयं कुर्या त्पत्रेपत्रे रुणप्रभम् ।
दळान्तराळसमितं श्रुत्तबाह्यं ज्यळाप्रभ ॥ २८ ॥
सितानि पीठकोणानि रक्तं तद्विक्चतुष्टयम् ।
राजोपळप्रभांवीथीं पत्रमाला घलंकृतां ॥ २९ ॥
पश्चिमांशा द्विनासर्व द्वाराण्यम्बुजपत्रवत् ।
कृष्णानि सर्वशोभानि द्वारोदेश स्थितानिच ॥ ३० ॥
तदर्धा कृतितुल्यानि नूपशोभानि गर्भयत ।
कोणानि केसराभानि सितशंखा न्वितानिच ॥ ३१ ॥
शोण हेमादिवर्णच क्रमाद्रेखागणंबहिः ।
कृत्वैवमनुसन्धाय सर्वांमायेन देशपद् ॥ ३२ ॥
रजांसिविद्धिभूषानि सितपीतादि तानिच ।
तस्मात्रा ण्युपशोभानि शोभानिप्रणानितु ॥ ३३ ॥

एवं सर्वाणि कोणानि स द्वाराणीन्द्रियाणिच ।
बाह्यावरण यद्वै सत्त्वाद्य त्रितयं हि यत् ॥ ३४ ॥
मन स्सुवितताधीभी गर्भपीठ मुदाहृतं ।
धीपद्मं तदधिष्ठाता बीजात्मा चिन्मय पुमान् ॥ ३५ ॥
अमूर्त ईश्वर श्चात्र तिष्ठ त्यानन्दलक्षणः ।
यस्य सन्दर्शनादेव शश्वद्भावः प्रसीदति ॥ ३६ ॥
ससंगाना मसंगानां वपुष्पाते कृते सति ।
प्रायशो मुक्तिभाजां च त्विह जन्मैव शेषिणाम् ॥ ३७ ॥
देव आस्ते ह्यतां हित्वा बहि रन्तश्च कर्मिणाम् ।
अन्यथा दृष्टमात्रा द्वै कथ माह्यात्म्य मेति वै ॥ ३८ ॥
अत स्संवेदनसम मस्तित्त्व [ च ] प्रतिपादकम् ।
यथात्स्वलक्षण तथं तत्त त्सर्वत्र लिङ्गिगम् [ सन्निग ] ॥ ३९ ॥
वस्तुत्वेन गृहीत्वैव मण्डल पूर्वनिर्मितम् ।
नाम्नाऽञ्जनाभभुवन सर्वदु स्खक्षयकरम् ॥ ४० ॥
तत स्तस्मिन् क्रमेणैव ध्यात्वैकैक निवेशयेत् ।
पूर्वोद्दिष्टेन बीजेन त्वाकारं परमेश्वरम् ॥ ४१ ॥
अथैवं भाजिता त्क्षेत्रा च्चतुरश्रा न्महामते ।
पूर्वोद्दिष्टानि धिष्ण्यानि यथा कार्याणि तच्छृणु ॥ ४२ ॥
पंचम ब्रह्मकर्माद्या न्मम प्राग्दिग्व्यवस्थितम् ।
अश दीर्घेन तास्येन कुर्या त्सूत्रेण लांछनम् ॥ ४३ ॥
अर्धचन्द्रसमाकार भागयुग्मस्य चान्तरे ।
दक्षिणोत्तरभागाभ्यां तद्वध स्तत्सम तथा ॥ ४४ ।
लांछनद्वितयं कुर्या तिर्यक्क्षस्थानसंस्थितम् ।
भागद्वादशकस्यैक्य स्या त्पङ्क्तिद्वितया तथा ॥ ४५ ॥
ब्रह्मकर्म चतुर्थ च त्सख्यामान च पूर्ववत् ।
मर्मतस्य च पक्षस्था वेकमर्मान्तरीकृतौ ॥ ४६ ॥

ताभ्यां मध्यस्थितेनैव सूत्रेणैतत्मजायते ।
पुनर्मध्या द्वितीयं यत्र मर्म चोर्ध्वं प्रवर्तते ॥ ४७ ॥
तस्माद्वैश्यन्तरीभूतं चतुर्थं पक्षयो द्वयोः ।
मर्म तत्स्थेन सूत्रेण वृत्तार्धे पूर्ववल्लिखेत् ॥ ४८ ॥
ब्रह्मकर्मणि पष्ठस्य प्रत्यग्दिक्संस्थितस्य च ।
मर्मणो प्यथ वै सूत्रं कृत्वा तत्सम्प्रसार्यच ॥ ४९ ॥
यावद्वृत्तार्धबुध्नस्य श्रृंगकोटे स्तु सन्निधिः ।
एवं सूत्रद्वये दत्ते धिष्ण्य श्शंखाकृति र्भवेत् ॥ ५० ॥
तस्य भागसमा कार्या लांछनैर्मेखला बहिः ।
पूर्वोक्तमर्मगै स्सूत्रै र्यथा तदवधारय ॥ ५० ॥
द्व्यंशर्द्धेण सूत्रेण नवचन्द्र कलासमम् ।
चतुर्णा मन्तरेखानां प्राग्दिक्कुर्याच्चलांछनं ॥ ५२ ॥
इशवह्नि पदाभ्यान्तु वृत्ततुर्यांश सम्मिते ।
द्वेलांछने समेकुर्या देकभागाद्विके तथा ॥ ५३ ॥
तत्समे ह्यपरे द्वेवै यदालांछयंचलांछनैः ।
दक्षिणोत्तरभागाभ्यां पश्चात्सूत्रद्वयंक्षिपेत् ॥ ५४ ॥
कृत्वासमम मर्मस्थं पूर्वोद्दिष्ट क्रमेणतु ।
जीवसूत्रस्य पाश्चात्ये भागे पार्श्वद्वयेस्थितम् ॥ ५५ ॥
भागद्वयं द्वयं लांछयं योन्यर्धचार्धवृत्तवत् ।
तच्छृङ्ग कोटिगेसूत्रे कृत्वा ते सम्प्रसार्यच ॥ ५६ ॥
खातभूभागपर्यन्तं तत्पदा द्दटपत्रवत् ।
जायते सर्वकुण्डानां योनिरेवंविधाशुभा ॥ ५७ ॥
भागार्धमान सूत्रेण योनेराभ्यन्तरेपुनः ।
अर्धवृत्त द्वयं दद्या त्तद्व स्सूत्रद्वयान्वितम् ॥ ५८ ॥
खातस्यान्तर्गतोऽर्ज्यं श्चतुर्थांशस्तु कोष्ठकात् ।
कोष्ठार्ध निम्नमेच्छेयं तासमंयापुरोदितं ॥ ५९ ॥

दैर्घ्यांत्पादाधिकाकार्या योनिर्वै पृष्ठ उन्नता ।
गजोष्ठ सदृशी चाग्रा स्पृशन्ती दशनच्छदम् ॥ ६० ॥
पुरोभाग चतुर्थांशं योने रग्रा द्विरूप्यतु ।
दद्यात्भावसूत्र सम्बन्धं सूत्राणां द्वितयम्परं ॥ ६१ ॥
अनुपातेनवै ताभ्या मग्रात्संकोचमाचरेत ।
भागपङ्क्ति त्रयेणैव मेखलात्रितयम्बहिः ॥ ६२ ॥
सम्पाद्य चतुरश्रन्तु शंखं सतवर्थी[ तुत्रितयो ] परि
शार्शखंमेखलानान्तु मोन्नतत्वं स्वविस्तृतेः ॥ ६३ ॥
मेखलानान्तु शंखस्य यन्मध्येश्रिचतुष्टयं ।
तच्चक्रचिह्नितंकुर्या त्तल्लक्षण मथोच्यते ॥ ६४ ॥
ब्रह्म मर्म निरुद्धेन चतुर्भाग समेनतु ।
खातार्थ माग्भमं दद्या त्क्षेत्रमध्ये महामते ॥ ६५ ॥
बहिर्भाग समानाभि स्तद्बहि द्वर्यशविस्तृतं ।
अरंक्षत्रन्च तस्यापि नेमिभाग समा बहिः ॥ ६६ ॥
भागेनतद्बहिस्त्वेका चतुरश्राच मेखला ।
भ्राममध्यावरक्षेत्रं वृत्तेनैकेन वैपुनः ॥ ६७ ॥
ततस्सूत्राष्टकदद्या द्दिग्विदिक्संस्थितम्पुरा ।
तस्यचान्तर्गसंपश्चा दष्टकं पातयेत्परं ॥ ६८ ॥
ततस्तेषां समापाद्य मरत्व ममलेक्षण ।
अन्तर्वृत्त निरोधेन प्रतिसूत्रस्य पक्षयोः ॥ ६९ ॥
सूत्रेण लांछने कुर्या न्नाभिनेमिभ्रमावधेः।
एकांशा दर्धमानं च नेमिवृत्तस्य चान्तरे ॥ ७० ॥
द्वाभ्यां द्वाभ्या मराभ्यां तु मध्ये कुर्या त्प्रधिं प्रधिम् ।
विस्तारमोन्नता नाभिः कूर्मपृष्ठोपमाऽरकः ॥ ७१ ॥
नेमिं दर्पणवत्कुर्या त्स्वीप त्रिम्नावसानतः ।
शिष्टं पुरोदितं सर्वं मथ पद्माकृतिं शृणु ॥ ७२ ॥

भागार्धं भ्रामये न्नाभे र्बहिः केसरसिद्धये ।
भ्रामये द्परं चार्धं मरक्षेत्रस्य बाह्यगम् ॥ ७३ ॥
नीत्वा द्योप मनेनैव विधिना नेमिमण्डलम् ।
अरसूत्राश्रितं कुर्या ततः पत्रदळाष्टकम् ॥ ७४ ॥
केसरभ्रमरुद्धेन सूत्रेणार्धेन्दुलक्षणम् ।
तच्छृंगकोटिसंस्थेन परिधे र्बाह्यकेन तु ॥ ७५ ॥
सूत्रद्वयेन पत्राग्रं कुर्या द्वाह्यभ्रमावनेः ।
निरन्तराणा मामूला त्केसराणा म्महामते ॥ ७६ ॥
कर्णिकोच्छ्रयतुल्यानां विभागं जनये त्स्फुटम् ।
शंखं कोणचतुष्केतु शेषं पूर्ववदाचरेत् ॥ ७७ ॥
योनि मेकेन भागेन चतुर्भि र्मेखळागणम् ।
खातं पूर्वसमं किन्तु वृत्ते वृत्तास्तु मेखलाः ॥ ७८ ॥
चतुरश्रे तदाकारा इत्युक्तं कुण्डपंचकम् ।
काळ माहुतिसंख्यां च होमद्रव्यप्रभूतताम् ॥ ७९ ॥
ज्ञात्वैव मेकहस्तात्तु कुर्या दष्टकरावधि ॥ ७९.२ ॥

इति श्रीपार्थरात्रे श्रीसात्वतसंहितायाम्
यागकुण्डविधि र्नाम

एकादशः परिच्छेदः ॥ ११ ॥

---

## अथ द्वादशःपरिच्छेदः ।

---

नारदः ।

एवमाकर्ण्यसात्वेव मुख्यो मुनिनायकाः ।
कृताञ्जलिपुटोभूत्वा पप्रच्छ जगताम्पतिं ॥ १ ॥

सङ्कर्षणः ।

यथाक्रम स्थितानाञ्च सर्वेषां [ मन्त्राणां ] छाश्मिनन्दन ।
श्वत्तोहं श्रोतुमिच्छामि मन्त्राणां [ सर्वेषां ] ध्यानलक्षणम् ॥२॥

भगवान् ।

त्रयाणां मुख्यपूर्वाणां ध्रुवान्तानां पुरोदितं ।
शेषादीनामशेषाणा मिदानी मवधारय ॥ ३ ॥
ध्यानं पाताळ निळय पर्यन्तानां यथास्थितम् ।
एक एव जगन्नाथ स्स्वरूपाद्यैस्तु शक्तिभिः ॥ ४ ॥
नानात्वेना प्यनन्तोयो भक्तानुग्रह काम्यया ।
तस्याभिमानिकं रूपं शृणुसर्वेश्वरस्यतु ॥ ५ ॥
तुहिनाचलसंकाशं पूर्णचन्द्र समाननं ।
स्व [सु] मणि व्यंजितेनैव युक्तं फणगणेनतु ॥ ६ ॥
मोद्वहन्तं हलंचक्र मपसव्य द्वयेनतु ।
वामहस्त द्वयेनैव शंखं मुसलमेवच ॥ ७ ॥
निरपत्रिहिताशेष शक्ति सर्वज्ञमच्युतम् ।
मनस्यन्त मुखानांच रकर्मणां पूरयेच्चतत ॥ ८ ॥
शक्तीशोप्यधसंचिन्त्यः पुण्डरीकनिभेक्षणः ।
इच्छारूप धरश्चैव सौम्य. प्रहासिताननः ॥ ९ ॥
व्यस्तयेच फलादीनां भक्ताना मनुकम्पया ।
पीडयन् स्वांघ्रियुग्मेन वसुधांच करद्वयं ॥ १० ॥
युगानुसारिकांतिश्च चतुर्वक्त्र श्चतुर्भुजः ।
मूर्तचक्र गदाहस्तः स्वमूर्ता च्छाम्बुजांकितः ॥११॥
शमं नयतिसन्तापं कमले नेन्दुकान्तिना ।
नानामन्त्र मयींविद्यां भाव [ व्यज ] यत्यमलात्मनां ॥ १२ ॥
सम्यग्वाग्पतिनाचैव कम्बुनाशब्दमूर्तिना ।
आज्ञा प्रवीक्षकेणैव गदाचक्र द्वयेनतु ॥ १३ ॥

प्रेरितेन हिनस्त्याशु साधुसन्तापकारिणम् ।
नारसिंहेन वस्त्रेण भवभीति विघातकृत् ॥ १४ ॥
पुष्णाति सर्वभूतानि वाराहेण भृतात्मना ।
कुरुते पश्चिमस्थेन कापिलेनोपसंहृतिम् ॥ १५ ॥
भक्तिश्रद्धापराणाञ्च स्मृतमात्र. समेत्यवै [ दैवहि ] ।
हृन्मध्ये गगनेभूमौ वह्निमध्ये जलान्तरे ॥ १६ ॥
चतुर्णां ब्राह्मणादीनां स्वयमेवानुकम्पया ।
चातुरात्म्येन रूपेण चतुर्धाव्यक्तिमेतिच ॥ १७ ॥
आत्मतुल्येनदेहेन शंखपद्माङ्कितेनतु ।
मूर्तिमद्भिर्हलाद्यैस्तु युक्तेनवदनैर्विना ॥ १८ ॥
वर्णानुरूपवर्णेन समेनाप्यसमेनतु ।
अन्योन्यानुगतेनैव पूर्वोद्दिष्टेननान्यथा ॥ १९ ॥
प्रळयानलसूर्याभः स्मर्तव्योमधुसूदन. ।
अष्टबाहुर्विशालांसो ध्वमीष्टो मकराङ्कित. ॥ २० ॥
शंखचक्रधरश्चैव बाणकार्मुक धृक्तथा ।
रजस्तमोभ्यां मूर्ताभ्यां सम्प्रवृत्ति निवृत्तये ॥ २१ ॥
कर्णपीठ निविष्टंच ध्येय पाणि युग विभोः ।
विद्याधिदेवं भगव च्चतुर्वक्त्र चतुर्भुजम् ॥ २२ ॥
दम्बकूर्च [ कर्ण ] जटा दण्ड कमण्डलधरं स्रुविणम् [ब्रह्म]।
फुल्लरक्ताम्बुजाभास श्वेतपद्म कराङ्कितम् ॥ २३ ॥
श्रुतीर्ऋग्गाथा वक्त्रेभ्यः प्रोद्गिरंतमनुस्मरेत ।
निर्धूमांगारवर्णाभ शंखपद्माक्षस्रुविणम् ॥ २४ ॥
फुल्लरक्ताब्जनिभय देवताध्यानसूत्रयम् । )
ध्यायेद्भवपाणिं त कपिलं तेजसां निधिम् ॥ २५ ॥
योऽन्त स्वयंभुवो देव स्वसाक्षिभूतो व्यवस्थितः ।
ह्यद्देहात्परतत्वानां स्वशासनपुष्या बिभर्ति च ॥ २६ ॥

अविद्याविष्कृतानां तु भक्तानां खल्प [ल्प] दातवे ।
स मनादि जगन्नाथं बहिस्स्थूलतरात्मनाम् ॥ २७ ॥
द्यावापृथिव्यो रन्तरस्थं विश्वरूप मनुस्मरेत् ।
अनेकवक्त्रांघ्रिकर मनेकमकरांकितम् ॥ २८ ॥
यद्यप्यनेकवदन मनेकभुजभूषितम् ।
तथापि वै त्रयस्त्रिंशं द्वदनै र्विविधै र्युतम् ॥ २९ ॥
चतुरभ्यधिकै र्दिव्यै श्चत्वारिंश न्महाभुजैः ।
ब्रह्मरुद्रेन्द्रदक्षार्क चन्द्रसिद्धा स्तथा श्रुतिः ॥ ३० ॥
पौरुषस्य तु वक्त्रस्य चोर्ध्ववक्त्रस्थिता स्त्वमी ।
पिशाचाग्निमरुच्छैल द्विपगन्धर्ववारिभिः ॥ ३१ ॥
वक्त्रैरूर्ध्वे स्थिते ध्यायेे द्दक्षिणं वदनं विभोः ।
पाताळादि र्महामेघ लोकराशिग्रहोत्थितैः ॥ ३२ ॥
वर्णे स्तार [ रास्स ] समेतै स्तु ध्याये द्वक्त्रं तु पश्चिमम् ।
यक्षान्तकाञ्जनाभाद्यै र्वसुनक्षत्रगोगणैः ॥ ३३ ॥
वक्त्रै र्धराद्यवक्त्रोर्ध्वे स्थिते ध्र्यायेच्च दक्षिणम् ।
पद्माद्यं चातुरात्मीयं मन्त्राणां दशकं महत् ॥ ३४ ॥
प्रोच्छ्रितं हि सुवर्णाद्यं तल्लांछनचतुष्टयम् ।
लोकेशाख्याष्टकं चैव पुस्तकं चाक्षसूत्रकम् ॥ ३५ ॥
दर्वी कमण्डलु र्हैम श्चाभयं हि वरान्वितम् ।
दर्भाजिनं तत श्छत्रं सुशुभं चामरं सितम् ॥ ३६ ॥
स्रुक्स्रुवौ चापि कलशौ वेदिर्वह्निसमन्विता ।
चन्द्रार्कमण्डले पूर्णे नागेन्द्रो मणिदर्पणम् ॥ ३७ ॥
पुष्पस्रग्व्यजनं दिव्यं विश्वपत्रलतातथा [ पात्रं तथा तथा ] ।
स्मर्तव्यास्तु भुजेष्वस्य विभोस्संस्थानकैस्समैः ॥ ३८ ॥
यथोदितक्रमेणैव व्यत्ययो नभवेद्यथा ।
भामिर्नानाप्रकाराभि र्देहोत्थाभि रिदंजगत् ॥ ३९ ॥

भारुयन्तं जगन्नाथं स्मरेद्रुक्कमलादिषु ।
हंसमूर्तिं मथात्मानं ज्ञानयज्ञभुजंस्मरेत् ॥ ४० ॥
कुन्देन्दु स्निग्धकान्तिञ्च होमकुण्ड महातनुम् ।
रजस्तमोघ्नं स्वस्त्व विग्रहं परमेश्वरं ॥ ४१ ॥
धर्माधर्मेक्षणंध्याये दर्शीषोमात्मकेनतु ।
दक्षिणोत्तरखंस्थेन पक्षयुग्मेनराजितम् ॥ ४२ ॥
वहिस्तमेवोदकस्थ न्तुहिनाचलसन्निभम् ।
ध्यात्वार्चयेत्तुविधिव द्धंसविग्रह मच्युतम् ॥ ४३ ॥
वहिर्द्रव्यमयस्त्वेक स्तामान्येनैकलक्षणः ।
सम्यक्चिर्वर्तितस्स्वर्ग पूर्वमृच्छति चार्थिनाम् ॥ ४४ ॥
अन्तर्वेद्यां चतुर्धाय स्त्वेकएव महामखः ।
तपोयागजपध्यान स्वरूपश्चश्चदेवहि ॥ ४५ ॥
याजिनामपवर्गन्तु विदधाति समापनात् ।
तयज्ञ पुरुषं [ वपुषं ] ब्रह्म वासुदेव मजंहरिं ॥ ४६ ॥
ध्याये द्वै सूकरात्मान मञ्जनाद्रि समप्रभं ।
यज्ञाङ्गचिह्नितांघ्रिच महाव्याहृतिदंष्ट्रिणम् ॥ ४७ ॥
भूर्भुवस्स्वश्शरीरंच शब्दब्रह्मैकमानसम् ।
निर्दुदन्तं मपध्नाना मविद्यापंकसंजसा ॥४८॥
वैद्येनपोत्र प्रान्तेन स्वक्षयेनामलेनच ।
वासनावासितानांच जीवानां भवशान्तये ॥४९॥
महाविभूति भगवान् पूर्णषाड्गुण्य विग्रहः ।
स्वकराब्जान्तराद्ब्रह्म तत्वादादाय चांजलिं ॥५०॥
करोतिसेचनंदोषं दधानांचस्वतेजसा ।
स्थूलरूपेणतमजं वहिराराधनाविधौ ॥५१॥
आध्मातंवापुनाद्ध न्निर्धूमांगारपर्वतम् ।
ध्यायेत्तद्वन्महादीप्तं याजिरक्तमलांजनं ॥ ५२ ॥

वज्रमहांजलिकस्थं त्र्यंबकनकलोचनम् ।
घोणाग्रेणाद्दरन्तंच त्रैलोक्योत्थमलेन्धनम् ॥५३॥
कृत्वातद्धस्मसात्सम्य वक्त्रकुर्यन्त स्मुत्तेनतु ।
धर्मधामान्य ममल मनादिनिधनंविभुं ॥५४॥
दुर्लभं यामबुद्धानां यंप्रसादाधियाविना ।
तस्यथूलतरंरूपं शृणुतत्मामयेपरं ॥५५॥
तुहिनाचलसंकाशं सौम्यवक्त्रं चतुर्भुजं ।
कामार्थौ धुद्वहन्तंच शंखपद्मच्छलेनतु ॥५६॥
साधुमार्गे स्थितानान्तु मयच्छन्तं धियायतौ ।
सिताक्षमालं धर्मन्तु वरपाणि मतस्मरेत् ॥५७॥
वाङ्मयाखिलंयस्य वस्तुजात मनश्वरम् ।
शक्तिवेन स्वभावस्यं चिद्रूपस्यामलद्युतेः ॥५८॥
वरधाजिमुखंध्याये ध्दधवागीश्वरंविभुम् ।
सूर्यकान्ताग्नि संकाश मनेकभुजभूषितम् ॥५९॥
कमलंचाक्षसूत्रंच वेदिन्त्रेताग्निभूषितौ ।
आज्यधारौ स्रुक्स्रुवौतु विष्टरंसोमसंयुतम् ॥६०॥
दर्भाजिनं मेखलांचा ष्यपसव्येषु षट्स्वमूः ।
स्मरेद्वामकरेष्वस्य पुस्तकं शंखमेवच ॥६१॥
दण्डंकमण्डलुंदर्वी मेकांश्मि त्रितयंकरे ।
पूर्णमाम्ये स्तथारण्ये श्चदर्वाजैस्तु पंचमे ॥६२॥
स्रुङ्मूलफलपत्रैस्तु यज्ञद्रव्ये स्सदक्षिणैः ।
सर्वाश्रमोपकरणे युक्तं चमसभाजनं ॥६३॥
ध्येयमस्य भुजेषष्ठे व्रतमूर्तै ऋंगादिभिः ।
वेदांगैरुपवेदैस्तु संस्कार स्समखैस्तथा ॥६४॥
विकारवसुधाधारे ह्यभावेतु गुणोदधौ ।
स्वशक्ति भावितंकृत्वा मनःपूर्व चतुष्टयम् ॥६५॥

प्रकृत्यन्तं समास्तीय स्वर्वदैः पुरुषात्मना ।
निपण्णं भोगिशय्यायां तंपैर्नायकचिंत्स्मरेत् ॥६६॥
देयमर्णवशाय्याख्यं मूर्तैश्चक्रादिकैर्वृतम् ।
लक्ष्म्यासंवाह्यमानंच समाक्रान्तंच निद्रया ॥६७॥
वीज्यमानंह्विवैर्भीत्या गीयमानंह्विविद्यया ।
कूर्मात्मा कूर्मवद्बुध्या ध्यातव्यस्त्वथलांगलिन् ॥६८॥
द्रवत्कनकवर्णाभ स्स्वसामर्थ्यो जलाश्रयः ।
शत्तयादिक कलाद्वंद्व द्वितीयांघ्रिस्सनातनः ॥६९॥
शाक्तयादिक कलाद्वयश्च प्रोद्धिरंस्तुः श्रुतित्रयम् ।
*अतसीपुष्पसंकाश शंखचक्र गदाधरः ॥७०॥*
मखोपकरणांगश्च निमग्नोद्धरणक्षमः ।
स्वशक्तिविभवाधार मिच्छोज्ञानक्रियार्चिषम् ॥ ७१ ॥
नानाविशेषविज्ञान स्फुलिंगोर्मिसदोदितम् ।
धारयन्तं स्थितं हार्द मनूनं मोह मुल्वणम् ॥ ७२ ॥
नरत्वाद् मनाव्येयं त मजं परमेश्वरम् ।
निस्तप्तकनकाभं च ध्याये द्देवं नृकेसरिम् ॥ ७३ ॥
ज्वलदग्निस्फुलिंगाभि स्स्वदेहोत्थाभि रावृतम् ।
रथांगशंखधातारं वृद्ध न्मूर्ति सुभीषणम् ॥ ७४ ॥
सासस्त्वकरज श्रेणि दीप्तेनोभयपाणिना ।
सम्यच्छन्तं धिया सम्यक् भविनो साभयं वरम् ॥ ७५ ॥
अमृताध्मातमेघाभ ममृताहरणं विभुम् ।
पीतांबरधरं ध्याये देकवक्त्रं चतुर्भुजम् ॥ ७६ ॥
श्रोणीतटार्पितकरं शंखचक्रविभूषितम् ।
मध्यतो दक्षिणेनैव वहन्तं गिरिरूपधृत् ॥ ७७ ॥
शुद्धज्ञानानुविद्धं च कर्मबन्धभीतिहम् ।
दिशन्तं स्वधिया सम्यक् भक्तानां भरतवत्सलम् ॥ ७८ ॥

मंथामथितदुग्धाब्धि क्षोभविधा प्रकाशितम् ।
अमृतं क्षुत्तृषादीनां प्रतिपक्ष मनामयम् ॥ ७९ ॥
शुद्धं ध्यानश्वरं भाव्यं मायाव्यर्णवमध्यगम् ।
आत्मामृतमनौपम्य माहात्म्यसकर्मणा ॥ ८० ॥
ध्याये रक्तमलगर्भाभं देवदेवं श्रियः पतिम् ।
कमलाळयहेतोश्च विभूषितकरद्वयम् ॥ ८१ ॥
द्वयं देवीपरिणये ळीलयैव समर्पयन् ।
प्रकाशय त्वनादिव मात्मनः प्रकृते स्सह ॥ ८२ ॥
मत्करे रमुविद्धेयं प्रकृतिः प्राकृते रहम् ।
यतोह माश्रय श्वास्या मूर्ते मंध्येतदात्मिका ॥ ८३ ॥
या माळम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम् ।
निस्तरं स्यचिरेणैव व्यक्तध्यानपरायणाः ॥ ८४ ॥
मदविह्वळनेत्रं च देव मुद्भिन्नयौवनम् ।
फुल्लरक्तांबुजाभास मत्यजन्तं निजां स्मृतिम् ॥ ८५ ॥
त्रैळोक्यविस्मयकरं कान्ताकृतिधरं स्मरेत् ।
आनन्दामृतसंपूर्णवदने नेन्दुकान्तिना ॥ ८६ ॥
कलशाकृतिरूपेण करस्थेन विराजितम् ।
ळीलाकटाक्षवाग्बाणै स्सुदयन्तं सुरद्विषः ॥ ८७ ॥
द्विरेफपटलाक्रान्त सहकारलताकरम् ।
कळामूर्त्यभिमानात्म राहुसंज्ञो विभीषणः ॥ ८८ ॥
मूर्तामूर्तेन रूपेण संप्रसत्यनिशंकिळ ।
अग्निषोममयीं मूर्तिं कर्मिणा मुपकारिणाम् ॥ ८९ ॥
योन्तःप्राणादि रूपेण चन्द्रादित्यात्मनाबहिः ।
स्थितस्तद्विजयेध्यक्षः सत्यध्यानरतात्मनाम् ॥ ९० ॥
निष्पन्द बोधभावेन सन्तुष्यन्तं स्मरेद्बहिः ।
नीलनीरदवर्णाभं पद्मपत्रनिभेक्षणम् ॥ ९१ ॥

मध्याह्न भास्कराकारं द्वादशारकरोद्यतम् ।
श्रोणीतटनिविष्टेन वामहस्तेन लीलया ॥ ९२ ॥
भ्रियमाणगदांगुर्वी निषण्णां धरणीतले ।
अविद्याख्याचयानेमिः कालचक्रस्य दुर्धरा ॥ ९३ ॥
समाधीयं समाश्रित्य विग्रहं विधुनोतिच ।
जपयज्ञ क्रियादीनां सामसेन बलेनच ॥ ९४ ॥
ध्यायेत्तामक्षरमंच देवंराजोपलक्षितम् ।
विज्ञानरश्मिभिर्दीप्तं सत्साव गरुडासनम् ॥ ९५ ॥
नानास्वरूप भूतात्म सद्विद्याभुजभूषितम् ।
चक्रं पद्मं गदां बाण मंकुशं कुंत मेवच ॥ ९६ ॥
षट्सु दक्षिण हस्तेषु शक्ति पाशौ च कार्मुकम् ।
मुसलं मुद्गरं भीमं खेटकं वाम बाहुषु ॥ ९७ ॥
देवआमृदर्लाभश्च स्मर्तव्यः पारिजातजित् ।
अक्लिष्ट कर्मा देवेश स्वनेका द्रुतविक्रमः ॥ ९८ ॥
प्रबन्ध प्रतिपन्नानां भक्तानामपिदेहिनाम् ।
योबोध भूमौ संरूढो ह्यनित्यश्चानुरंजकः ॥ ९९ ॥
न्यग्रोधविटपाकारो ह्यविद्या बन्धलक्षणः ।
कर्मवृक्षस्सुविततो मोहमाया फलावृतः ॥ १०० ॥
तदुत्पाटन सिध्यर्थं मनुग्राह्यजनंसदा ।
आविश्यास्तेंशमात्रेण कृपयास जगत्प्रभुः ॥ १०१ ॥
सविवेकात्मनाभूत्वा ज्ञानबाहु वितानधृक् ।
ऐश्वर्य धर्म वैराग्य ज्ञानाख्य क्षितिशक्तिभृद ॥ १०२ ॥
आदाय संयमास्त्रौघं नियमास्त्रगणं तथा ।
इन्द्रियादिगणं जित्वा कर्मिणां दोषहोद्यिः ॥ १०३ ॥
यदस्य सुरजिद्रूपं सद्वादशभुजं स्मरेत ।
दिव्यमाल्याम्बरधरं दिव्याभरणभूषितम् ॥ १०४ ॥

चतुर्वक्रं सुनयनं वामोत्संगार्पितप्रियम् ।
खड्गं चक्रं गदां बाणं मुसलं च तरूत्तमम् ॥ ५ ॥
षट्सु दक्षिणहस्तेषु शंख मंकुश कार्मुके ।
छत्रं च फणभृत्पाशं विभो र्वामभुजे ष्वमी ॥ ६ ॥
षष्ठेनालिंगिता देवी सारविन्देन बाहुना ।
सदंसलग्नकरया देव्या तच्चित्तया ऽ निशम् ॥ ७ ॥
संवीज्यमानं विनया च्चामरेण सितेन तम् ।
लोकनाथं विशालाक्षं सर्वदेवनमस्कृतम् ॥ ८ ॥
सरसिंहासनारूढं ध्याये न्मीलितलोचनम् ।
पद्मासने नोपविष्टं पद्मगर्भोपमद्युतिम् ॥ ९ ॥
करुणाविष्टबुद्धिं च शंखपद्मकरांकितम् ।
ज्ञानवैराग्य सद्धर्म मार्गत्रयनिदर्शकम् ॥ ११० ॥
संस्मरे दथ दत्ताख्यं ज्ञानमूर्तिमकल्पकम् ।
मनुष्यमुनिदेवानां समाधिनिरतात्मनाम् ॥ ११ ॥
ईषल्लब्धरसानां च ब्रह्ममार्गानुसारिणाम् ।
स्वप्रभानिकरेणैव भासयन्तं च तत्पथम् ॥ १२ ॥
मनसा सह वायूना माकृतिप्रतिषेधकृत् ।
श्रुतीना म्मानसानां चा प्याचाराणां तथैव च ॥ १३ ॥
वर्णाना माश्रमाणां च परिरक्षक एव हि ।
मानसैकार्णवाम्भस्थे निष्कम्पे बुद्धिपादपे ॥ १४ ॥
अभिमानलताढ्येचा प्युपरिस्थ मनुस्मरेत् ।
प्रावृड्गिरि रिव श्यामं तेजसा ज्वलनोपमः ॥ १५ ॥
ध्वंसकृ च्छिन्नजालस्य निद्रालस्य चयस्य यः ।
उत्कृष्टद्विजरूपेण विकसत्पद्मरूपिणा ॥१६॥
स एव द्विभुजो ध्येयो दण्डदर्भाक्षसूत्रधृत् ।
दन्तज्योत्स्नाजिताशान न्यग्रोधशयनं विभुम् ॥ १७ ॥

निषण्ण मीषदुत्तानं द्विभुजं शिशुरूपिणम् ।
एए एध (?) निरस्ताक्षं शान्तनिद्रारसं स्थितम् ॥ १८ ॥
अनुज्झित स्वभावंच योगमाया बलेनच ।
त्यजन्तमाहरंतंच श्वासोच्छ्वास द्वयेनतु ॥ १९ ॥
आब्रह्म भवनं सर्वं कर्मगाधानिकांहियत् ।
अपौरुषेण रूपेण संवृतावयवात्मना ॥ १२० ॥
स्वमायाजठमध्यस्थ मध्यक्षमखिलं स्मरेत ।
ज्ञानादिगुणवृन्देन पञ्चभूतेन भूषितम् ॥ २१ ॥
स्थोाथंसलिलप्लुतं ब्रह्म मेकशृंग विराजितम् ।
कल्पावसान समये वहन्तश्चैव चिन्तयेत् ॥ २२ ॥
लौरूपां वितता क्षोणिं प्रजापति गणान्वितम् ।
मुक्ताफलगणेनैव वपुषा निर्मलेनच ॥ २३ ॥
अनिमीलितनेत्रस्य मीनात्मा भगवा नथ ।
यो नित्यं भवभीतानां वुधानां कृपया स्वयम् ॥ २४ ॥
हृत्स्थो नियतिदण्डेन मार्ताण्डायुतसन्निभः ।
जित्वा ज्ञानबलं भीम मिन्द्रियारिगणान्वितम् ॥ २५ ॥
सर्वैच्छ त्यचिरा द्ब्रह्म नन्दनं सासुराय च ।
ध्याये तमेव हृन्वांगं श्यामं पद्मदळे क्षणम् ॥ २६ ॥
अन्तर्निविष्टभुवनं जटावल्कलभूषितम् ।
छत्रं तद्वामहस्ते स्य दण्ड मन्यत्र वैष्णवम् ॥ २७ ॥
आरभ्य जायदादित्य सूर्येन्दुद्युतिभुस्मभाम् ।
*त्रिषुलक्ष्मो अगवां स्तुवंरूप त्रिविधभूषितं दृत ॥ २८ ॥*
स्मेरस्य वनिस्कात स्वपद्मा दमृतप्रभाम् ।
आह्लादजननीं शक्तिं कामिनीं भावितात्मनाम् ॥ २९ ॥
वैकोरस्पारक्तं ध्याये तमेव दरितद्युतिम् ।
नानामुद्राप्रयुक्तेन भुजवृन्देन भूषितम् ॥ १३० ॥

खेटकेनांघ्रिदण्डेन वहंत मरिसूदनम् ।
वहन्तं सद्वैजयन्तीं देवानां च जयार्थिनाम् ॥ ३१ ॥
खड्गैर्चक्र[ अब्जखेटकैः ] गदादण्ड बाणांकुशखमुद्गरा. ।
शक्तिः परशुशैलेन्द्रो दशदशभुजेष्वमी ॥ ३२ ॥
शंखतोमरशार्ङ्ग च पाशशूलमहीरुहाः ।
कुलिशं क्षुरिका चैव लांगलं मुसलं महत् ॥ ३३ ॥
वामहस्ते स्वमीध्येया, अन्येषुद्रान्विताद्दश ।
भयविस्मय मुद्रेणी. कण्ठग्रहण लक्षणा. ॥ ३४॥
ध्येया मुद्रा विभो.पंच सव्येतु करपचके ।
वराख्यां भूतिसंज्ञांच. युक्ताख्यां साभयान्तुवै.॥ ३५ ॥
गोपनीन्द्राहस्तेषु तासंख्येषु च सस्मरेत ।
जगत्सूतं सदा [भा] क्षेत्तु येनोक्त ममितात्मना ॥ ३६ ॥
गुणषट्क स्वरूपेण पूर्वोक्ताकृतिभिर्विना ।
स्मर्तव्य स्वचतुर्धावै लांछनाद्यै विवर्जितः ॥ ३७॥
सर्वदापरिरक्षान्तु जयपूर्व चतुष्टयम् ।
योगक्रिया तपोन्तश्च सद्भिर्भुक्त्यपवर्गदम् ॥ ३८ ॥
नराद्यः कृष्णनिष्ठश्च पृथगेव तन्वेच्छया ।
नरन्तत्र मयाळाभ मर्धोन्मीलित लोचनम् ॥ ३९ ॥
अन्तर्निविष्टभावच शब्दब्रह्मैस्मानसं ।
यदेोपलक्षणम्मन्तं ख्यमानमलक्षितम् ॥ १४० ॥
स्फाटिकेनाक्ष सूत्रेण करस्थेनचशोभितम् ।
गणयन्नक्षसूत्रीया नावर्तान् वामपाणिना ॥४१ ॥
अथनारायणन्देव ध्यायेत कुमुदपाण्डुरम् ।
बद्धब्रह्मांजलिशान्त हृत्पद्मार्पितमानस ॥४२ ॥
युञ्जानश्च स्वमात्मानं परस्मिन्नव्ययेपदे ।
कमण्डलुधरध्यायेत याचनाभमवोहर ॥ ४३ ॥

निषण्ण मौषदुत्तानं द्विभुजं शिशुरूपिणम् ।
एद पथ(?) निरस्तास्त्रं शान्तनिद्रारसं स्थितम् ॥ १८ ॥
अनुज्झित स्वभावंच योगमाया बलेनच ।
त्यजन्तमाहरंतंच श्वासोच्छवास द्रवेनतु ॥ १९ ॥
आब्रह्म भवनं सर्व कर्मगाधानिकांक्षिपत् ।
अपीहपेण रूपेण संवृतावयवात्मना ॥ १२० ॥
स्वमायाजलमध्यस्थ मध्यक्षमधलंस्मरेत ।
ज्ञानादिगुणवृन्देन पक्षभूतेन भूषितम् ॥ २१ ॥
स्वोश्थसन्निस्तृतं ब्रह्म मेकशृंग विराजितम् ।
कल्पावसान समये वहन्तश्चैवं चिन्तयेत् ॥ २२ ॥
नौरूपां विततां क्षोणिं प्रजापति गणान्वितम् ।
मुक्ताफलगणेनैव वपुषा निर्मलेनच ॥ २३ ॥
अनिर्मीलितनेत्रस्त मीनात्मा भगवा नथ ।
यो नित्यं भवभीतानां सुधानां कृपया स्वयम् ॥ २४ ॥
हस्थो निर्यातिदण्डेन मार्ताण्डायुतसन्निभः ।
जित्वा ज्ञानचक्रं भीम मिन्द्रियारिगणान्वितम् ॥ २५ ॥
सर्वेच्छ त्वचिरा दूम नन्दनं सत्सुखाय च ।
ध्याये समेव हस्वांगं श्यामं पद्मदले क्षणम् ॥ २६ ॥
अन्तर्निविष्टभुवनं जटावल्कलभूषितम् ।
छत्र तद्वामहस्ते स्य दण्ड मन्यत्र वैष्णवम् ॥ २७ ॥
आक्रम्य जायदादित्य सूर्येन्दुहुतभुक्प्रभाम् ।
तिष्ठन्तमनन्तो भगवां स्तुर्याख्य खिद्धिभूतिभृत् ॥ २८ ॥
समेत्य सनिच्छात स्वपदा दमृतप्रभाम् ।
आरादादजननी शक्ति कामिनी भावितात्मनाम् ॥ २९ ॥
चन्द्रेश्वपूरक ध्याये समेव हरितद्युतिम् ।
नानामुद्रायुक्तेन भुजवृन्देन भूषितम् ॥ १३० ॥

खेटकेनाग्रिदण्डेन वहंत मरिसूदनम् ।
वहन्तं खड्गेजयन्तीं देवानां च जयार्थिनाम् ॥ ३१ ॥
खड्गचक्र[ शङ्खखड्ग ] गदादण्ड बाणांकुशखमुद्गरा. ।
शक्तिः परशुशैलेन्द्रौ दशदशभुजेष्वर्मी ॥ ३२ ॥
शंखतोमरशार्ङ्ग च पाशशूलमहाहलाः ।
कुलिशं क्षुरिकां चैव लांगलं मुसलं महत् ॥ ३३ ॥
वामहस्ते स्वेमीध्येया, अन्येमुद्रान्वितादश ।
भयविस्मय मुद्रेणी, कण्ठग्रहण लक्षणाः ॥ ३४॥
ध्येया मुद्रा विभो पंच सव्येतु करपंचके ।
वराख्यां भूतिसंज्ञां च. युक्ताख्यां साभयान्तुवै ॥ ३५ ॥
गोपनीन्दक्षहस्तेषु तारसंख्येषु च संस्मरेत ।
जगत्सुत्रं सदा [ भा ] क्षेत्तु येनोक्त ममितात्मनां ॥ ३६ ॥
गुणषटक स्वरूपेण पूर्वोक्ताकृतिभिर्विना ।
स्मर्तव्य स्वचतुर्धावै लाञ्छनाद्य विवर्जितः ॥ ३७॥
सर्वदापरिरक्षान्तु जयपूर्व चतुष्टयम् ।
योगक्रिया तपोन्तश्च सद्भिभूत्यपवर्गदम् ॥ ३८ ॥
नराद्यः कृष्णनिष्ठश्च पृथगे कश्चेच्छया ।
नरन्तत्र मवालाभ मर्धोन्मीलित लोचनम् ॥ ३९॥
अन्तर्निविष्टभावंच शब्दब्रह्मैकमानसं ।
यद्वोपलक्षणमन्त्रं ध्यपमानमलक्षितम् ॥ १४० ॥
स्फाटिकेनाक्ष सूत्रेण करस्थेनचशोभितम् ।
गणयन्नक्षसूत्रीया नावर्तान् वामपाणिना ॥४१ ॥
अथनारायणन्देवं ध्यायेत कुमुदपाण्डुरम् ।
बद्धब्रह्मांजलिंशान्तं हृत्पद्मार्पितमानसं ॥४२ ॥
पुशानश्च स्वमात्मानं परस्मिन्नव्ययेपदे ।
कमण्डलुधरंध्यायेत रोचनाभमतोहरि ॥ ४३ ॥

विष्टराविष्टपाणिंच क्रियाकाण्डप्रदर्शकम् ।
पठन्त मनिशं शास्त्रं पंचरात्रपुरस्सरम् ॥ ४४॥
कृष्णमिन्दीवरश्याम मूर्ध्वबाहुं जटाधरं ।
पादेनैकेनतिष्ठन्त माहरन्तंच मारुतं ॥ ४५ ॥
एकांत्रिषड्ढादिषड्रात्रा यतिकृच्छ्रपरायणम् ।
पक्षमासोपवासांश्च दिशन्त मनुचिन्तयेत् ॥ ४६ ॥
कृष्णाजिनोत्तरीयाश्च सर्वेकाषायधारिणः ।
ब्रह्मलिंगधरास्सर्वे सर्वेब्रह्मपरायणाः ॥ ४७॥
मुख्यकर्म परिक्रान्ता स्साधूनां प्रेरणायच ।
कालानुकाल माश्रित्य सर्वेसर्वपरायणाः ॥ ४८॥
अखंगशत्तयाभगवान् सत्कुठाराभिधानया ।
छिनत्ति बद्धमूलान् यः कर्मवृक्षांस्तु कर्मिणाम् ॥ ४९॥
तमेव द्विभुजंध्याये दुदयादित्यवर्चसं ।
कृष्णैणचर्मवसनं सत्कुठारकरांकितम् ॥१५०॥
दशेन्द्रियाननंघोरं योमनोरजनीचरम् ।
विवेकशरजालेन शमं नयतियोगिनां ॥ ५१॥
ध्येय स्सएव विश्वात्मा सतोय जलदप्रभः ।
रक्तराजीवनयनो धनुश्शरकरांकितः ॥ ५२॥
वाग्देव ममलं योधै स्वरूप यतिलक्षणम् ।
स्वयंस्स्वोर्थंविभजति त्रिधापश्यन्ति पूर्वकम् ॥ ५३॥
बोधमारुतहत्पूर्व स्थानेष्वभ्युदितंक्रमात् ।
स्मर्तव्य स्सोऽपिभगवा नतसीकुसुमद्युतिः ॥ ५४॥
यद्वन्वै वामहस्तेन सर्वशास्त्रार्थ पुस्तकं ।
दक्षिणेनतुशास्त्रार्थं मादिशंश्च यथास्थितम् ॥ ५५॥
युगानुसारियोधाना मखेद जननायच ।
विभजंस्तु चतुर्धावै वेदमेकं त्रिकालवित् ॥ ५६॥

दानधर्मरतानांच यागयज्ञातु याजिनाम् ।
तपस्स्वाध्याय सक्तानां मुक्तानां वै पुनर्भवात् ॥ ५७॥
संरक्षणाययोग्यत्व विज्ञानव्यक्तये ऽपिच ।
समुदेति जगन्नाथ स्तेषां हृत्कमलावनेः ॥ ५८॥
मनोवाजिन माक्रम्य स्वादायात्म गुणायुतान् ।
नूनमुत्पादयत्याशु जन्मान्तर शतोत्थितम् ॥ ५९॥
वैषयं वासनाजालं नाशयत्यात्म सिद्धये ।
ध्यायेद्दराश्वगन्तंवै तनुत्रावृत विग्रहम् ॥१६०॥
सितोष्णीषललाटंच नातिदीर्घजटाधरं ।
द्रवत्कनकवर्णाभ मिषुधि द्वनमध्यगम् ॥ ६१॥
शरचापकरव्यग्रं खड्गकुन्त कुठारिणम् ।
यज्ञाध्ययन दानादि परिरक्षन्तमेवाद्वि ॥ ६२॥
शातयन्त मवर्णाश्वा स्वधर्मनिरतात्मनः ।
सर्वतत्त्वाश्रयन्तत्त्वं सर्वशक्तिमयंविभुम् ॥ ६३॥
सर्वेन्द्रिय गुणाभासं सर्वेन्द्रिय विवर्जितम् ।
आधारं भुवनानांच ध्यातव्य स्तदधस्स्थितः ॥ ६४॥
अनन्तशयनारूढः कल्पान्तहुतभुक्प्रभुः ।
ज्वलज्ज्वालावलीयुक्तः ज्वलनांशुकवेष्टितः ॥६५॥
चक्रायायुधबृन्देन मूर्तेन परिवारितः ।
स्थितांघ्रिदेशतो लक्ष्मी श्चिन्ता दक्षिणतो विभोः ॥ ६६ ॥
मूर्धदेशगता निद्रा पुष्टि स्तद्वामत स्स्थिता ।
प्रधानदेवताध्यान मिद मुक्तं समासतः ॥ ६७ ॥
यज्ज्ञात्वा विनिवर्तन्ते जन्ममृत्युजराखजः ।
नाम्नै वक्षै ध्वजै येषां व्यक्ति र्व्यक्ता जगत्त्रये ॥ ६८ ॥
तेपि लाञ्छनबृन्दं तु धारयन्त्यक्षिगोचरे ।
ललाटे चांसपट्टे तु पृष्ठे पाणितलद्वये ॥ ६९ ॥

तनूरुहचये मूर्ध्नि कामिणां प्रतिपत्तये ।
अपि संसारिणो जन्तो स्स्वभावा द्वैष्णवस्य च ॥ १७०॥
न जहा त्यच्युतं लिंगं किं पुन र्विभवाकृतेः ।
सर्वेषां कामचारित्वं यदुक्तं वै मया पुरा ॥ ७१ ॥
तदंघ्रिभुजवर्णास्य बृहन्मध्याणुलक्षणम् ।
एकाद्यनेकसंख्यं च दृश्यं सर्वत्र सर्वदा ॥ ७२ ॥
नत्वन्यरूपता कार्या कारणं कामरूपताम् ।
यस्मा दस्ति पृथग्भूतो व्यापारो विश्वमन्दिरे ॥ ७३ ॥
देवानां स्थितिसंहार सृष्टिकाले स्वक स्स्वकः ।
सत्येवं नियमे सिद्धे तथापि भगवद्वशात ॥ ७४ ॥
चातुरात्म्यसमूहात्तु यत्पद्मदळभूस्थितम् ।
तथा विभवदेवाना म्मध्या त्पद्मदळेक्षण ॥ ७५ ॥
एक स्स्वनुगृहार्थं तु शक्त्यात्मा भावितात्मनाम् ।
बिभर्ति बहुभेदोत्थं रूपं सद्वाहनस्थितम् ॥ ७६ ॥
यदनुस्मरणा द्ध्याना दर्चना दचिरा त्पुमान् ।
प्राप्नोति मनसो ऽभीष्टं तन्मे निगदत श्शृणु ॥ ७७ ॥
सत्य स्सुवर्णो गरुड स्तार्क्ष्य श्च विहगेश्वरः ।
पञ्चात्मकस्य प्राणस्य विकार स्स्वेष पंचधा ॥ ७८ ॥
आचांघ्रिगोचरा त्सत्यो यस्य देह स्तु पौरुषः ।
द्विभुज स्तुहिनाभ श्च स सत्यः प्राणदैवतम् ॥ ७९ ॥
सुपर्णः पद्मरागाभो निर्मल स्स्वर्णलोचनः ।
गरुडः कांचनाभ स्तु कुटिलभ्रूरुणेक्षणः ॥ १८० ॥
केकराक्ष स्तु तार्क्ष्यो वै प्रावृड्जलदसन्निभः ।
द्रवत्कनकनेत्र स्तु शबळाभश्च पंचमः ॥ ८१ ॥
चतुर्भुजा स्सुपर्णाद्या स्सौम्यरूपास्स्वनाकुलाः ।
पतत्रि चरणास्सर्वे पक्षमण्डल मण्डिताः ॥ ८२ ॥

लम्बोदरास्सुपीनाङ्गा. कुण्डलाद्यैस्तु भूषिता. ।
त्रुटिलास्सुवृत्ताक्ष पक्षतुण्डा स्मितानना ॥ ८३ ॥
अपानादि समीराणा माधिपत्येन संस्थिता. ।
महाबला महाकाया रक्ततुण्डोऽत्र पचम ॥ ८४ ॥
आधेय चरणाधस्स्थ स्सव्य आद्यस्य वैकर ।
दक्षिणश्चाक्षसूत्रेण सुसितेनच भासित. ॥ ८५ ॥
एवमेवसुपर्णस्य परिज्ञेयम्भुजद्वय ।
नाभ्युद्देश परोवाम उत्तानस्तुलयेस्मय ॥ ८६ ॥
आधेयचरणाधस्थ स्सव्यगाद्यस्य वैकर ।
पुष्पस्तम्बक सम्पूर्ण ऊर्ध्ववक्त्रस्तु दक्षिण. ॥ ८७ ॥
गरुडस्य द्वयविद्धि हृद्देशेजलिरूपिणम् ।
तत्रैव सम्पुटाकार चतुर्थस्य करद्वय ॥ ८८ ॥
दक्षिणे ऽमृतकुम्भस्तु वामतु विषम फणी ।
पचमस्य द्वयशेष त्रयाणाच द्वयोस्समम् ॥८९ ॥
आधेय चरणाक्रान्तो यद्दिवै दक्षिण कर ।
सचारोविहितोवामे त्वक्षसूत्रस्य वैतदा ॥१९०॥
आधेयचरणाधस्स्थ यस्यपाणितलद्वय ।
निरस्तसूत्रन्तविद्धि वाहनभगवन्मय ॥ ९१ ॥
अनुग्रहपरस्त्वास्ते पक्षिपक्षाङ्ग विग्रहे ।
स्वतेजो निजसामर्थ्य ससूचक करा[स्वा]न्वित. ॥ ९२ ॥
पद्मासनादिनाचैव केवलया श्रियान्वित ।
सुप्रसन्नावयवस्थित्या विद्धि त गरुडासन ॥ ९३ ॥
मेढ्रभूस्सोदरास्यैव गोपिताविगगामिना ।
वीर्यपाता स्स्वशिरसा गच्छतश्चाण्डजेनतु ॥ ९४ ॥
लोकान्तराणा कार्यार्थ वात्सल्याद ध्यायिनामपि ।
प्रत्यक्षदर्शनार्थ तु स्मृतोगरुडवाहन. ॥ ९५ ॥

तस्माद्भगवतोविष्णो रेवंरूपधरस्यतु ।
समाहूतस्य सिद्ध्यर्थं मासीनं संस्मरेत्स्थितिम् ॥ ९६ ॥
उपसंहृतवामांघ्रिः कञ्जस्थोवा खगस्थितः ।
वाममिच्छाफलानांयो ध्वंसयत्यन्यचिन्तितम् ॥ ९७ ॥
आजानो दक्षिणस्यैव मविक्षिप्त स्स्मृतोच्युतः ।
आमोक्षा त्सर्वसिद्धीनां दक्षिणाध्यायिनां भवेद् ॥ ९८ ॥
सर्वमेव ऋजुस्थित्या संस्थित श्चार्थिनां स्मृतः ।
स्वस्तिकाचै भवत्येव किन्तु ते वाहनं विना ॥ ९९ ॥
विहिताः पीठ कल्हार सिंहासन गतस्यच ।
विहगाधिपविश्वात्र यागैश्वर्या द्विभर्तिच ॥ २००॥
सचक्र भुजवृन्दन्तु नागेंद्रास्त्रवरान्वितम् ।
विभो राज्ञावशेनैव तुष्ट्यर्थं वा स्वयं विभोः ॥ १ ॥
जगज्जयोदयार्थंतु शान्तये शरणैषिणाम् ।
विभिन्नेनच रूपेण नाना लोकान्तरेपुच ॥ २ ॥
अनिरुद्ध गति र्धीरो विचरत्येकएवहि ।
तदारूढस्य यद्रूपं शक्तीशस्यच सम्प्रति ॥ ३ ॥
अनेक भेदभिन्नन्तु निबोध गदतो मम ।
संयच्छन्तं सदाशान्ति भाविनां दक्षिणेनतु ॥ ४ ॥
प्रोद्वहन्तं च वामेन शंखं पूर्वोक्तलक्षणम् ।
द्विभुजस्य त्विदं रूपं शक्तीशस्यतु केवलम् ॥ ५ ॥
रूपेणानेन च पुन स्त्वोहासमुपयान्तिच ।
सह कान्तागणे नैव त्वेकायेन पृथक्पृथक् ॥ ६ ॥
माघ लक्ष्म्या समेतं य सदेकं रूप मैश्वरम् ।
श्रीपुष्टचो रगमध्यस्थं द्वितीय परिकीर्तितम् ॥ ७ ॥
श्रियादि माया निष्ठेन चतुष्केण वृतं परम् ।
शुद्धयादिकेन षट्केण चतुर्थ विद्धि साम्प्रतम् ॥ ८ ॥

पुष्टयन्तेन श्रियाद्येन त्वष्टकेनतु पंचमम् ।
लक्ष्म्याद्येन द्विषट्केण षष्ठं विद्धि समन्वितम् ॥ ९ ॥
श्रीदेवी कीर्तिदेवीच जयादेवी हलायुध ।
चतुर्थी भगवन्माया विश्वस्यास्य नियन्त्रणी ॥२१० ॥
शुद्धि निरञ्जना नित्या ज्ञान मुक्ति [ स्थैर्य ] पराजिते,
प्रकृति स्सुन्दरी षट्क मित्युक्तं सर्वसिद्धिदम् ॥ ११ ॥
लक्ष्मीश्शब्दनिधिस्सर्वे कामदा प्रीतिवर्धनी ।
यशस्करी शान्तिदाच तुष्टिदा पुष्टिदाष्टकम् ॥ १२ ॥
द्विषट्कं वैभवे योगे देवीनां कीर्तिदं हि यत् ।
लक्ष्म्याद्यं तच्च बोद्धव्यं भेदेऽस्मिन् पारमेश्वरे ॥ १३ ॥
पुनश्चतुर्भुजस्यैवं विज्ञेयं भेदसप्तकम् ।
किन्तु वै शंखचक्रे द्वे वामहस्ते द्वयेन तु ॥ १४ ॥
जग त्यस्मिन् हि यच्छन्तं शान्ति माद्येन शाश्वतीम् ।
प्रोद्वहन्तं द्वितीयेन त्वपसव्येन वै गदाम् ॥१५॥
भूयःकरचतुष्केण पूर्वोक्तेन क्रमेण तु ।
चतुर्णां मब्जपूर्वाना मन्योन्यत्वेन धारणात ॥ १६ ॥
धत्ते द्वादशधा रूपं निश्शक्तिकं च केवलम् ।
पुन र्द्वादशकं तच्च सह शक्तिद्वयेन तु ॥ १७ ॥
स्थित मेकाधिकेनैव षोढा कमललोचन ।
एवं चतुर्भुजेनैव वपुषा बहुधा स्थितः ॥ १८ ॥
सप्तधा षड्भुजाद्येन भुजाधिक्येन वै पुनः ।
स्थित स्त्वनेकधा देवो यथा तदवधारय ॥ १९ ॥
षड्बाहु रष्टबाहु श्च दशद्वादशबाहुधृत् ।
द्विसप्त षोडशकर स्तथाष्टादशभूषितः ॥ २२० ॥
केवलादिश्च सर्वेषां प्राग्वद्भेदस्तु सप्तधा ।
तन्मेश्शृणु यथावस्थ मस्त्रविन्यास चिह्नितम् ॥ २१ ॥

# अथ त्रयोदशः परिच्छेदः ।

भगवान् ।

योगोऽस्मिन् स्वेनपीठेपि सर्वसामान्यलक्षणे ।
ध्येयाविशेषरूपेण किरीटाद्याखिलास्तुषे ॥ १ ॥
चतुर्भुजाश्चतुर्वक्त्रा वस्त्रस्रग्भूषणान्विताः ।
पुनर्विशेषयोगाना मर्चनावसरेपुनः ॥ २ ॥
एकाननंचसर्वेषां द्विभुजं विहितंसदा ।
किरीटस्सौम्यवदनः कांचनाभोमहातनुः ॥३॥
भाभिराकृतियुक्ताभि र्नानारूपाभिरावृतः ।
स्थितोवैद्याधरायेन स्थानाकेनान्तरिक्षगः ॥ ४ ॥
पद्मरागाचलाकारं कौस्तुभं रत्ननायकम् ।
दिशोदशद्योतयन्तं सकलांघ्रि स्थितंस्मरेत् ॥ ५ ॥
वहन्तंवक्षसोमध्ये स्वहस्तकृतसम्पुटम् ।
सन्धारयन्तमपरं तथापिशिरसोपरि ॥ ६ ॥
स्फटिकाद्रिप्रतीकाशं श्रीवत्समथभावयेत् ।
बद्धपद्मासनासीनं न्यस्तहस्तंस्वपार्श्वयोः ॥ ७ ॥
वहन्तंकूर्ममुद्रांच मुख्यहस्तद्वयेनतु ।
ध्येयाभगवतीमाला चित्ररूपामनोहरा ॥ ८ ॥
सर्वगन्धान्वितासौम्या ईषद्विकसिताननः ।
स्वरश्मिमण्डलान्तस्स्थं वलन्तं इतिपंस्मरेत् ॥ ९ ॥
विभोराज्ञांप्रतीक्षन्तं हृस्वाङ्गं रक्तलोचनम् ।
कुन्दा [ ना ] वदात कमलं सौम्यमीष त्स्मिताननम् ॥१०॥
रवं सुवन्तं मधुरं श्रोत्रेन्द्रिय सुखावहम् ।
गदांहेमाद्रिसंकाशां तन्वीं कुवलयेक्षणाम् ॥११॥

स्वोत्थेनरश्मिजालेन भावसन्तीं नभस्स्थलम् ।
तुहिनाचलसंकाशं शंखं कमललोचनम् ॥१२॥
सदागमादिसारन्त मुद्गिरन्तं स्वकैर्मुखैः ।
सन्ध्याजलदसंकाशं लांगलंभीमलोचनम् ॥१३॥
क्षौ [ क्षा ] मांग मुन्नतांसंच यज्ञकायं यलोत्कटम् ।
कृशोदरंच मुसलं रश्मिज्वालावलीवृतम् ॥१४॥
अंगारराशिसदृशं प्रकम्पमतिनिष्ठुरम् ।
नीलोत्पल दलश्याम मिष्वस्त्रं बहु [ बाल ] विग्रहम् ॥१५॥
नानारूपंचनिशितं दीर्घदक्चण्डविक्रमम् ।
कार्मुकंहेमगौरंच किंकिणीजालमण्डितम् ॥१६॥
आस्फोटयन्तंस्वकरं महाजलदनिस्वनम् ।
स्वरश्मिखचितंध्याये न्नृत्यमानंच नन्दकम् ॥ १७ ॥
शारदाकाश संकाशं दशन्तंदशनावलिं ।
सूर्यमण्डलसंकाशं खेटकं सौम्यमूर्तिकम् ॥१८॥
ग्रसन्तमस्त्रवृगानि स्ववक्त्रेण निशम्बलात् ।
बद्धमुष्टिस्मरेद्दण्डं रक्तांगं रक्तलोचनम् ॥१९॥
क्रोधमूर्तिं स्वदशनै र्दशन्तमधरंस्वकम् ।
शक्रकार्मुकवर्णंच परशुंभीमविक्रमम् ॥२०॥
प्रवालकनकनेत्रंच ज्वलज्ज्वालाजटाधरम् ।
पाशंफणगणाकीर्णं विद्युज्जिह्वं भयानकम् ॥ २१ ॥
हेमालिपाण्डराभंच घोरास्यंरक्तलोचनम् ।
कृशांगंदीर्घबाहुंच पिंगलाक्षन्तुचांकुशं ॥ २२ ॥
विकरालमुखंरौद्रं भिन्नाञ्जनगिरिप्रभम् ।
मुद्गरंशतधामाभं पीनांसं पृथुविग्रहम् ॥ २३ ॥
जटाकलाप धृत्सौम्यं पुण्डरीकनिभेक्षणम् ।
वज्रंवज्रोपलाभन्तु सितदीर्घं नखाग्रितकम् ॥ २४ ॥

षड्भुजो दक्षिणैर्धत्ते निस्त्रिंशं कमलं गदाम् ।
सशरं कार्मुकंशङ्खं वामैरस्त्रोत्तमन्त्रिभिः ॥ २२ ॥
गदा मुसलचक्राभी नष्टबाहुस्तु दक्षिणैः ।
शंखमंकुश पाशौच वामैस्तु सशरंधनुः ॥२३॥
खड्गबाण गदापद्म शक्तियुक्तास्तु दक्षिणाः ।
दशबाहोर्धनुःशंख चक्रखड्गाश्च साभयाः ॥ २४ ॥
षण्णांदक्षिण हस्तानां द्विषट्क भुजभूषितः ।
सन्धत्ते कमलं खड्गचक्रबाणगदांकुशान् ॥२५॥
शंखपाशाभयान्शक्ति सव्यानाम्मुसलंधनुः ।
चतुर्दशभुजोधत्ते वामैतुभुजसप्तके ॥२६॥
शंखंगदांकुशौपाशं मुसलंमुद्गरंहलं ।
दण्डाब्जकुलिशान्चक्रं खड्गशक्तिपरश्वधान् ॥२७॥
बिभृयात्षोडशभुजो मुख्यहस्तैस्समुद्गरान् ।
अभयंकमलंखड्गं शक्तिदण्डवरांकुशान् ॥२८ ॥
शंखचक्रगदावज्र पाशलांगलकार्मुकान् ।
वरंकराष्टकेनैव धत्तेसव्येनविश्वजित् ॥ २९ ॥
पद्मखड्ग गदावज्र चक्रबाण वरांकुशान् ।
दण्डंदक्षिणहस्तैस्तु धत्तेऽष्टादशबाहुधृत् ॥२३०॥
शंखाभयौहलंशक्तिं मुद्गरंमुसलं धनुः ।
कुठारमतुलंपाशं बिभ्रुर्वामभुजैरमून् ॥ ३१ ॥
बिभर्तिदुष्टशात्यर्थं साधूनांपालनायच ।
भूयांसिशेषरूपाणि त्वेतान्येवविशेषतः ॥३२॥
स्वचक्रद्वयमात्रेण नयत्यमितविक्रमः ।
सिद्धतेजोसहिष्णूनां पितृयानरतात्मनां ॥३३॥
अंगनादिकसंसार भीतानांविहितायच ।
अमूर्तवैमदैभागे स्तैजसेनिरयदक्षिणे ॥३४॥

वामदक्षिणवक्त्राभ्यां कुर्याद्दिव्यायुधंप्रभुः ।
हृदयेपिच शांत्यर्थं तेजसःपद्मलोचन ॥३५॥
हेतुनानेनभगवान् बहिरंतर्गतेनवै ।
अग्नीषोमौसमीकृत्य स्वास्तेसाधारणात्मना ॥ ३६॥
ब्याकिवागीशवक्त्रन्तु नीःवैवंशिरसोपरि ।
पंचवक्त्रेणवपुषा स्वामूलाद्यात्यनेकधा ॥ ३७॥
शब्दमंत्रस्ततानांच ध्यायिनामात्मसिद्धये ।
आपातालाच्चसर्वेषां लोकानांपूरणायच ॥३८॥
नानावपुर्धरोभूय स्वधिकेनैवयातिच ।
भेदेनरूपमाश्रित्य दशधार्चसितादिकं ॥३९॥
विनावक्त्रैर्विहायै स्सर्वज्ञमहिमान्वितः ।
बिभर्तिरूपाण्येतानि स्वनिरुद्धस्तुतार्क्ष्यकं ॥२४०॥
एवमाक्रम्यगरुडं प्रद्युम्नोविभूयात्ततुः ।
नानात्वमभिचारयेति संकर्षण सुपर्णगः ॥४१॥
देवस्सर्वोपरिस्थित्वा विश्वात्मा यात्यनेकधा ।
सुरसिद्ध मनुष्यादि भूतानां दुःखशान्तये ॥ ४२ ॥
चतुर्णायो निजावर्णा स्तेतुमूर्त्यतरेषु च ।
चतुर्भुजस्यादि मूर्तं विष्णो मूर्त्येतरस्यच ॥ ४३ ॥
वर्णलांछन तुल्यत्वे भेदकृत्सध्वजद्वयम् ।
अपसव्यस्थितेनैव तत्राळाख्य ध्वजेनतु ॥ ४४ ॥
स्वरूपमिदमाप्नोति स्वमूर्तिं स्सहसर्वदा ।
यस्मात्कार्यवशेनैव मूर्तानामपि पाणिगाः ॥ ४५ ॥
चतुः पद्मादयोमूर्ता मूर्ताश्शान्ता स्तधोद्यताः ॥ २४५॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
विभवदेवताध्यान नाम
द्वादशः परिच्छेदः ॥ १२ ॥

दंष्ट्राकराळवदनं ज्वलत्कनकलोचनम् ।
सौदामिनीप्रभाशक्तिं शान्ताग्निवदनेक्षणम् ॥ २५ ॥
घनघर्घरनिर्घोषं मुञ्चन्तीम्मुहुर्मुहुः ।
एते ऽत्र नायकास्सर्वे विभोराज्ञाप्रतीक्षकाः ॥ २६ ॥
मोरियतायिचलंतश्च कुसुमैस्स्थानके[सुसंस्थैर्यानके] स्थिताः ।
श्रोणीतटार्पितकराः श्यामरत्नजनोद्यताः ॥ २७ ॥
सपन्नन्तुकिरीटाद्यं सर्जयित्वाचतुष्टयत् ।
तर्जयन्तंच दुष्टौघ मन्येषां दक्षिणंकरं ॥ २८ ॥
स्मर्तव्यं ध्यानकालेतु सर्वेषामधमस्तके ।
ध्येयंस्वकंस्वकंचिह्नं सुप्रसिद्धं निराकृति ॥ २९ ॥
किरीटोहुतभुग्वेद्यः कौस्तुभस्तुप्रभाकरः ।
स्वयंशशांकः श्रीवत्सो माळाचैवपतत्रिराट् ॥ ३० ॥
काळश्चैवमहाबुद्धे विद्धिचक्रन्तु हेतिपं ।
अपाम्पतिश्चैकमलं गदादेवीसरस्वती ॥ ३१ ॥
खंशंखस्सीरमोषध्यो मुसलं ना [न] गनायकः ।
शब्दादयस्साधकास्तु धनुर्विद्धिसमीरणम् ॥ ३२ ॥
नन्दकं सर्वशास्त्राणि खेटकं वसुधास्मृता ।
ज्ञेयोहि दण्डो नियति वैराग्यं परशुस्स्मृतः ॥ ३३ ॥
पाशोमायांकुशःकामो ऽप्यहंकारस्तु मुद्गरः ।
विज्ञानममलं वज्रं समाधि श्शक्तिरुच्यते ॥ ३४ ॥
भिन्नरूपस्यचविभो येडक्त स्सुन्दरीगणः ।
साधारश्चाप्यना [धा] धार स्तासां ध्यानं क्रमाच्छृणु ॥३५॥
चिन्ताखण्डळचापाभा लक्ष्मीरक्ताम्बुजप्रभा ।
पुष्टिः कनकगौराच कीर्तिः कुमुदपाण्डुरा ॥ ३६ ॥
जयार्ककान्तिसदृशी माया ञ्जननिभास्मृता ।
शुद्धिः किंशुकसंकाशा गुञ्जाभातु निरञ्जना ॥ ३७ ॥

बन्धुजीवोज्वलानित्या।ज्ञानशक्ति स्सिताह्णा ।
फुल्लेंदीवर वर्णाच परिज्ञेया पराजिता ॥ ३८ ॥
रक्तोत्पलाभा प्रकृति स्सितपीता सरस्वती ।
सर्वकामप्रदां विद्धि स्विन्द्रनील समप्रभाम् ॥ ३९ ॥
सिन्दूर पुञ्जवर्णाभा विज्ञेयाप्रीतिवर्धनी ।
यशस्करीच दुग्धाभा शान्तिदा विद्रुमोज्ज्वला ॥ ४० ॥
तुष्टिस्तुहिनसंकाशा दयावैडूर्यसन्निभा ।
निद्रायस्कान्तसदृशी क्षमापीतारुणप्रभा ॥ ४१ ॥
कान्तिर्दर्पणसंकाशा धृतिर्गोरोचनोज्ज्वला ।
मैत्रीबन्धूकपुष्पाभा रतिर्गैरिकसन्निभा ॥ ४२ ॥
मतिर्मरकताभावै सर्वाःप्रमुदिताननाः ।
दिव्यमाल्याम्बरधरा नानालंकारभूषिताः ॥ ४३ ॥
दिव्यस्रग्वेष्टनोपेता वीक्षमाणास्स्वक पतिम् ।
चतस्रश्शक्तयोयाम्तु विभोश्शयनकस्यतु ॥ ४४ ॥
प्रयुक्तास्तत्रपूर्वाशा वस्थितावीजयत्यजम् ।
प्रयंयद्विक्रयस्यन्तु तत्संवाहनतत्परम् ॥ ४५ ॥
यत्रैकाश्रीर्विभोस्तत्र सन्निवेशपरोदिता ।
यत्रैकाश्रीर्विभोस्तत्र वामेवादक्षिणेपिवा ॥ ४६ ॥
श्रीपुष्ट्याख्यद्वयंयत्र तत्रतद्दक्षिणोत्तरे ।
पद्मासनेनोपविष्टा पक्षिपक्षद्वयेस्थिता ॥ ४७ ॥
*नलिनीनालहस्ताढ्या मृदुकुंभकरापरा ।*
अग्नीषोममयोदेह आद्योयस्सर्वगस्यच ॥ ४८ ॥
तस्यशक्तिद्वयंताद्द गमिश्रं भिन्नलक्षणम् ।
भोक्तृशक्तिस्स्मृतालक्ष्मीः पुष्टिर्वैकर्तृसञ्ज्ञिता ॥ ४९ ॥
भोगार्थमवतीर्णस्य तस्यलोकानुकम्पया ।
उदितसदृशैनैव शक्तिद्वितयमन्वयम् ॥ ५० ॥

नानात्वेनद्विधैवस्य परिणामः प्रकीर्तितः ।
दिक्पत्रचतुरन्तस्थं यद्वैदेविचतुष्टयम् ॥ ५१ ॥
शक्तिः परशु पाशास्त्र मंकुशं तत्करेष्कमात् ।
षट्कंकेसरजालस्थं तत्रप्राक्पश्चिमेद्वयम् ॥ ५२ ॥
द्वयं द्वयं सौम्ययाम्ये तासां वाम करेषु च ।
शंखं चक्रं गदा सीर मिष्वस्त्रं नन्दकं शितम् ॥ ५३ ॥
पत्रमध्येनिविष्टन्तु यत्कान्ताष्टक मुत्तमम् ।
तस्यवामकराणाञ्च विज्ञेयन्त्वादितोऽष्टकम् ॥ ५४ ॥
श्रीफलंचाक्षसूत्रंच ग्दर्पणः पुष्पमंजरी ।
विष्टरं किंकिणीचाम्र संचयःकमलेक्षण ॥ ५५ ॥
विज्ञेयश्शान्तिदःपाणि द्वांदशानान्तुखाभयः ।
अन्तरान्तरयोगेन सर्वाश्चामरलांछिताः ॥ ५६ ॥
स्वस्तिकेनोपविष्टाश्चा प्यन्तर्मुदितमानसाः ।
द्वयादिकस्यास्यसंघस्य द्वादशान्तस्यकाङ्क्षिन् ॥ ५७ ॥
सितादिकेनवर्णेन लांछनव्यत्ययेनतु ।
तुल्यलाञ्छनयोगेन तत्रिरासेचवैसति ॥ ५८ ॥
वराभयाभ्यामन्योन्य पाणिभ्यामथकेवलात् ।
बहुधाभेदवृन्दन्तु परिज्ञेयन्तुपूर्ववत ॥ ५९ ॥
शेषंभवोपकरणं देवानां निचयोद्विसः ।
सुप्रसिद्धोमहाबुद्धे किन्त्वब्जाद्यैस्तु पूर्ववत् ॥ ६० ॥
ध्यातव्यालांछितास्सर्वे पाणिपादतलेषुच ।
भक्तिश्रद्धाव्रतपर स्सर्वेषां यस्सदैवहि ॥ ६१ ॥
ध्यात्वैवमर्चनंकुर्यात भोगैस्संस्पर्शपूर्वकैः ।
सोचिरान्मोक्षनिष्ठन्तु फलंप्राप्नोत्यभीप्सितं ॥ ६२ ॥
किरीटाद्यस्त्रनिष्ठेन परिवारेण चावृतम् ।
भक्त्या ह्यभीप्सित रूप मर्चनीय मथापि वा ॥ ६३ ॥

निर्मुक्तपरिवारं वा स्वेन ध्यानेन लक्षितम् ।
विद्धात्यर्चना नूनं स्वपदं फलसंयुतम् ॥ ६४ ॥
ज्ञात्वैवं साधकः कुर्या यथाभिमत मर्चनम् ।
आत्मशक्तिसमै भोगै रखिलै श्शुद्धविग्रहैः ॥ ६५ ॥
हृदिवेद्यां बहिर्मूर्तौ प्रासादेस्वगृहेतुवा ।
बहुमाकारनिर्मुक्ते धूमदाहादिनोज्झिते ॥६६॥
शरणेरमणीयेच निरसम्पर्कंतु भाविते ॥६६॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
भूषणायस्त्र देवताध्यानं नाम
त्रयोदशः परिच्छेदः ॥ १३ ॥




## अथ चतुर्दशः परिच्छेदः ।

भगवान् ।

अखण्डनायनित्यस्य तथानैमित्तिकस्यच ।
कर्मणश्चोदयामास हलीविष्णुं मुनीश्वराः ॥ १ ॥
यैराजीवावधिकालं नित्यमाराधनंप्रति ।
धीःकृतापुण्डरीकाक्ष श्रद्धापूतेनचेतसा ॥२॥
तेषामाकस्मिकाल्लोपा द्भोगानामप्यसंभवात् ।
यत्स्यात्तस्योपशमनं ज्ञातुमिच्छामि साम्प्रतम् ॥ ३ ॥

भगवान् ।

लोभबुद्धिं विनायस्य भोगाना मप्यसम्भवः ।
सामर्थ्येनविनायस्य कृच्छ्रादीनां परिच्युतिः ॥४॥

आह्लादायामराणांच पितॄणां तृप्तयेतुवै ।
आप्यायानार्थं भूतानां भुवनानांचभूतये ॥ ४ ॥
देशदोषप्रशान्त्यर्थं गोब्राह्मणहितायच ।
बहुशाखमभग्नाग्रं समूलंयदपुष्पितम् ॥ ५ ॥
प्राङ्मुखोदर्भमादाय प्रणवेनपुराक्षितैः ।
ततस्तेनैवतन्मूलं प्राग्वत्कुर्यादधिष्ठितम् ॥ ६ ॥
तस्यमध्यमनाळेय त्र्यग्भूतमवतिष्ठते ।
आराध्यमन्त्रनाथेन स्मरेद्व्याप्तम्महात्मना ॥ ७ ॥
विवर्तपारमात्मीय मध्यक्षंचापिविद्धितम् ।
अनेकगर्भमुच्चंय त्काण्डकाण्डेपुचोत्तमम् ॥ ८ ॥
अणिमादिगुणैर्युक्तं पुंस्कारवं तेनकल्पयते ।
वाचकन्तस्ययोक्तव्यं हंसयुक्तन्द्विलक्षणम् ॥ ९ ॥
बहिःकाण्डचतुष्केण चित्तपूर्वंचतुष्टयम् ।
ग्रथ [ ग्रन्थ ] नीयमधोवक्र मव्यक्तान्तस्वकैः पदैः ॥ १० ॥
प्रणवादिनमोऽन्तैस्तु व्यापकंसूक्ष्मलक्षणम् ।
एवंश्रोत्रादिकान्पंच स्वनाम्नाग्रथ [ न्ध ] येत्तथा ॥ ११ ॥
कर्मेन्द्रियाणि तदनु ततस्तन्मात्रपंचकम् ।
पंचकन्तथभूतानां बध्वावैक्ष्माबलानिकम् ॥ १२ ॥
अवशिष्टैस्तु तत्काण्डै र्बध्नीयात्त त्तद [ त्कर] ण्डवत् ।
विनाशिखासमूहेन समुत्तानावधेरथ ॥ १३ ॥
किंचित्तदूर्ध्वदेशाच्च यथानोयातिवैगुनः ।
बहुधाकाण्डसंघस्तु कल्पितस्तत्वसंख्यया ॥ १४ ॥
विभिन्नानां च काण्डानां भंगादिकृतमस्यच ।
उत्पद्यते ऽन्यथात्वंच तस्मात्तद्ग्रथयेद्दृढम् ॥ १५ ॥
दर्भमञ्जिन्त्वेवं सम्पाद्यादौपवित्रकम् ।
अनुसन्धीयंततत्र मन्त्रध्यानं यथास्थितम् ॥ १६ ॥

पूजयित्वार्घ्यपुष्पाद्यै रलंकृत्यपठेदिदम् ।
त्वमेवतीर्थभगवं स्त्वमेवायतनंपरम् ॥ १७ ॥
त्वय्येवाधिष्ठितंसर्व मितिजानामितत्वतः ।
तत्रापिचत्वयादिष्टं क्रियाकाण्ड शुभमदम् ॥ १८ ॥
यत्तन्निर्वाहया स्वच त्वदनुग्रहकाम्यया ।
विज्ञाप्य एवं भगवान् मन्त्रमूर्तिः परावरः ॥ १९ ॥
तं पत्रपात्रगं कृत्वा ब्रह्मयानगतन्तु वा ।
वेदगेयध्वनीशंख शब्दमङ्गळपूर्वकम् ॥ २० ॥
नीत्वा तीर्थान्तिकं तत्र तीरदेशे निधाय च ।
पूर्वामुखं च तं यान मथादाय पवित्रकम् ॥ २१ ॥
वामहस्ते तले कुर्या त्क्ष्मामण्डलगतन्निवव ।
विधृया न्मध्यभागाच्च पाणिना दक्षिणेन तु ॥ २२ ॥
अवतीर्याभसो मध्ये निमज्जे त्सह तेन वै ।
सन्निधि तत्र तत्काळ प्रकुर्वन्त्यचिरात्तु वै ॥ २३ ॥
निश्शेषाणि च तीर्थानि लोकत्रयगतानि च ।
मन्त्रात्मा यत्र रक्षार्थ क्षण मास्ते जळाशये ॥ २४ ॥
तत्रायतनतीर्थानां सर्वेषां स्या त्समागतिः ।
किं पुन र्यत्र भगवान् मन्त्रमूर्ति रधोक्षजः ॥ २५ ॥
साधकाभ्यर्थित स्स्नाया त्सर्वानुग्रहया धिया ।
विद्वान्योनेन विधिना तीर्थ मासाद्य तत्ववित् ॥ २६ ॥
स्नापये द्बन्धुमित्रादीन् प्राप्नुवन्त्यचिरा च्च ते ।
तीर्थ फलमानायासा न्मन्त्रमूर्तेः प्रसादतः ॥ २७ ॥
किन्तु तद्यानवादित्र वर्जितस्तु भवे द्विधिः ।
इमं विद्धि महाबुद्धे विशेष चात्र कर्मणि ॥ २८ ॥
सामान्य मविनाश्च य च्चिन्मयं रूप मैश्वरम् ।
विशेषसंज्ञासम्बन्धं जीवदंसं विभाव्यताम् ॥ २९ ॥

पवित्रकं तथाकारं स्मृत्वा स्नाप्य ततोऽभवा ।
एवं तेनैव चान्येषां बहूनां बहुभि स्तु वा ॥ ३० ॥
सम्पाद्यं विप्रैः स्नानं दूरस्थानां सदैव हि ।
सम्पन्ने स्नपने त्वेवं द्वितीये ऽ ह्नि महामते ॥ ३१ ॥
रथे कृत्वा चिते तं वै प्रपूज्य च यथाविधि ।
यात्राख्य मुत्सवं कुर्या दन्नदानपुरस्सरम् ॥ ३२ ॥
सनृत्तगेयवादित्रं जागरेण समन्वितम् ।
एकरात्रं द्विरात्रं वा त्रिरात्रं भक्तिपूर्वकम् ॥ ३३ ॥
सकृ त्संवत्सरस्यान्ते पुत्सवस्नपनादिकम् ।
कुर्या द्योमन्त्रनाथस्य स सिद्धिं लभते पराम् ॥ ३४ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
पवित्रस्नानविधि र्नाम

## पंचदशः परिच्छेदः ॥ १५ ॥

---

## अथ षोडशः परिच्छेदः ।

---

नारदः ।

प्रभुर्मुनीश्वराभूय श्चोदितोवनमालिना ।
सर्वलोकहितार्थन्तु यत्तद्वक्ष्याम्यतःपरम् ॥ १ ॥

सङ्कर्षणः ।

देवसम्प्रतिपन्नाये क्रमेस्मिन्ब्राह्मणादयः ।
दीक्षणीयाःकथन्तेवा एतदिच्छामिवेदितुम् ॥ २ ॥

भगवान् ।

यथाक्रमेणोदितानां वर्णानांश्शृणुलांगलिन् ।
त्रिविधंदीक्षणोपायं संक्षेपात्सर्वसिद्धितम् ॥ ३ ॥
पूर्वोक्तलक्षणोज्ञात्वा कश्चिद्दृढतरम्पुमान् ।
संसारभयभीतस्तु निर्वाणमभिवांछति ॥ ४ ॥
वैराग्यधी रचपळ श्चिरकालंगुरोर्गृहे ।
संस्थितोदासभावेन खेदोद्वेग विवर्जितः ॥ ५ ॥
ज्ञात्वातस्यार्थितांतून माहूयाग्रेनिवेश्यच ।
कृताकृतंच पृष्ठ्व्य आस्मृतेस्तात्क्षणावधि ॥ ६ ॥
ज्ञात्वादोषबलंसम्य क्मायश्चित्तैर्यथोदितैः ।
कृच्छ्रातिकृच्छ्रपूर्वैस्तु शोधनीयं प्रयत्नतः ॥ ७ ॥
बहूनांपरिपीडाना मसामर्थ्यात्तुलांगलिन् ।
मनःप्रसादपर्यन्तं कालंवा द्वादशाह्निकम् ॥ ८ ॥
नियोक्तव्योमितपूते ऽ याचितेनक्तभोजने ।
स्तुतिसम्मार्जनस्नान पुष्पाद्याहरणोद्यमैः ॥ ९ ॥
आश्रमेवैष्णवानान्तु दिव्योचायतनेविभोः ।
अनिशम्भगवद्बिम्ब स्यापीठादवलोकने ॥ १० ॥
अभिजाततनुर्यःप्रा ग्दुष्कृतै र्मलिनीकृतः ।
साम्प्रतंभगवद्भक्तया पवित्रीकृतमानसः ॥ ११ ॥
अहोरात्रोषितोभूत्वा नखकेशादि लुण्ठि [ञ्छि] तः ।
पंचगव्यमधापाद्यं हृद्याद्यैस्सकुशोदकम् ॥ १२ ॥
मन्त्रैस्सद्वासुदेवाद्यै स्समावार्यचतुश्शतम् ।
एवंदिनचतुष्कन्तु स्नापयेत्तेन तंसुधीः ॥ १३ ॥
प्रत्यहंचतुरोवारा नाप्रभातनिशागमम् ।
प्रद्युततीर्थं चतुष्कंस त्वापूर्यांपूर्वसम्पिबेत् ॥ १४ ॥
क्रमात्संचोदितैर्मन्त्रै स्समाचम्यान्तरान्तरा ।
अतृप्तमशनंकुर्या दन्तेदाराग्यभावितम् ॥ १५ ॥

क्षपयेत्फलमूलैर्वा अहोरात्रचतुष्टयम् ।
इतिभक्त्याप्रपन्नाना मार्जावमपि दुष्कृताव [ निष्कृतिः ] ॥ १६ ॥
कथितांविरतानांच देहशुद्धिकरम्परम् ।
ब्रह्मकूर्चसमेतन्तु प्रायश्चितं मयायते ॥१७॥
ज्ञात्वामदत्त्वं दोषाणां त्रिविधानान्तुवैपुरा ।
सम्भवेसतिहेमादि दानंसततमाचरेद ॥ १८ ॥
पूर्वोक्ताद्विहितात्काला स्तुदुष्कृतिनाक्रमाद ।
चतुर्थांशेन ह्रासस्तु ब्रह्मकूर्च पिबेत्ततः ॥१९॥
कालेनवर्णोत्कर्षेण सहसामान्यमुच्यते ।
प्रायश्चित्तंहिसर्वेषां सर्वकल्मषनाशनम् ॥२०॥
उत्तरोत्तरताम्बुध्वा प्रथमंदुष्कृतस्यच ।
क्षपयेत्तद्विजेन्द्रस्तु मासैर्द्वित्रिचतुर्गुणैः ॥ २१ ॥
नृपविट्शूद्रजातीय एकैकंवर्धयेत्क्रमात ।
मासमेकादिकात्काला त्समारभ्ययथाक्रमम् ॥ २२ ॥
दुराचारोपिसर्वाशी कृतघ्नोनास्तिकः पुरा ।
समाश्रये दादिदेवं श्रद्धया शरणंयदि ॥ २३ ॥
निर्दोषं विद्धितंजन्तुं प्रभावात्परमात्मनः ।
किम्पुनर्योनुतापार्त श्शासनेऽस्मिन्हिसंस्थितः ॥ २४ ॥
विरतो दुष्कृताच्चैव भक्तिच्छायां समाश्रितः ।
एवंसंशुद्धदोषाणां बहुजन्मार्जितस्यच ॥२५॥
कल्मषस्यविघातार्थ नारसिंहीं महामते ।
कृत्वावैसांप्रतं दीक्षां दद्याद्धिमंत्रपूर्वकम् ॥ २६ ॥
आराधनंहि तस्यैव वैभवीयस्यवैविभोः ।
सबाह्याभ्यन्तरंचैव सम्यङ्मासचतुष्टयम् ॥२७॥
मासाष्टकं वत्सरंवा बुध्वा भावबलम्पुरा ।
ज्ञात्वाभ्याशयानांच प्रसादम्पारमेश्वरम् ॥ २८ ॥

विभवव्यूहसूक्ष्माख्यां दीक्षांकुर्यादनन्तरम् ।

संकर्षणः ।

परिज्ञेयोहिकौलिगे स्साधकानामवक्षयात् ॥ २९ ॥

सम्यगाराधनान्मन्त्र प्रसादःकमलापते ।

भगवान् ।

चित्तप्रसादस्त्वतुल स्तेजोवृद्धिरतीवहि ॥ ३० ॥

धैर्यमुत्साहसन्तोषा वकार्पण्यादयोगुणाः ।

येषां तेषां हि बोद्धव्यं मन्त्रात्समाभिमुख स्स्थितः ॥ ३१ ॥

प्रयुक्ति श्शान्तिकादीनां कर्मणा मचिरादपि ।

प्रयाति यदि साफल्यं विज्ञेयं तेन हेतुना ॥ ३२ ॥

सम्पन्नः पापदाहश्च प्रसन्नश्चापि मन्त्रराट् ।

ददाति धर्मकामार्थां नचिरा यदि योजितः ॥ ३३ ॥

अणिमाद्यष्टकं चापि विविधा योगसिद्धयः ।

आत्मसिद्धिसमेताश्च परितुष्टा स्तदा स्मृताः ॥ ३४ ॥

यस्मि न्वै वैभवे रूपे यस्याभिरमते मनः ।

तस्य कल्मषशान्त्यर्थं दीक्षां कुर्या त्त तेन वै ॥ ३५ ॥

तमाराध्यहिपूर्वोक्त कालं तमनुयोज्य च ।

योग्यतायाः परीक्षार्थं मात्रान्ते स्सर्ववस्तुषु ॥ ३६ ॥

नारसिंह्मेन वान्येन मन्त्रेणा,भिमतेन च ।

दीक्षया ऽऽराधनेनैव होमजापव्रतादिना ॥ ३७ ॥

कर्मणा केवलेनैव शान्तिकाद्युच्छ्रितेन च ।

विनाणिमादिसिद्धिभ्यो बुध्वा पापं क्षयं गतम् ॥ ३८ ॥

भावये त्तेन कालेन ततः पद्मदलेक्षण ।

सिद्धानां वैभवीयानां षाड्गुण्यमहिमाश्रये ॥ ३९ ॥

संस्कृतश्रुतपाठाभ्यां स्वगुरुंप्रार्थयेत्ततः ।
भगवद्यागपूर्वन्तु पुत्रकात्वंपरम्पदम् ॥ २४ ॥
असन्निधानात् स्वगुरोः प्रार्थयेत्तत्प्रतिष्ठितम् ।
तदभावात्तुवैचान्यं क्रमात्सद्वैष्णवोद्वियः ॥ २५ ॥
नान्यदर्शनसंस्थन्तु गुरोर्यस्मादवैष्णवात् ।
कर्मतन्त्रंसमन्त्रंच द्रव्यसंघातजम्फलम् ॥ २६ ॥
नूनंवैफल्यमायाति तस्मात्तंपरिवर्जयेत् ।
द्रव्यमन्त्रक्रियाभाव भेदात्फलमनश्वरम् ॥ २४ ॥
जायतेकर्मिणांशश्व दभेदाद्वैश्यकर्मिणाम् ।
सर्वत्रसमबुद्धीना मात्मन्यभिरतात्मनाम् ॥ २५ ॥
लोकाचारविमुक्तानां यज्ञविग्राद्दिणान्तुवै ।
ज्ञात्वैवंतद्दवैयस्य सम्बन्ध स्तत्फलोभवेत् ॥ २६ ॥
संबंद्धासउपास्तव्य इहामुष्मिकसिद्धये ।
लिंगैरेतैःपरिज्ञेय स्तद्जोत्थैरकृत्रिमैः ॥ २७ ॥
आचार्यैस्तमयीनाम शिष्योजात्याच्चतुर्विधः ।
एवंपुत्रकपूर्वाये परिज्ञेयास्त्रुतेत्रयः ॥ २८ ॥
किन्तुतस्यविशेषोय स्तमिदानींनिबोधतु ।
विज्ञाताग्गुरुणायस्य विनियोगात्कृतार्थता ॥ २९ ॥
स्वल्पमद्धयोतमात्रेन शिक्षितेनागमेनच ।
तस्यानुग्रहबुध्यातु आभू [ हू ] तस्याच्युतालये ॥ ३० ॥
कृपानिरीक्षणाद्यश्च देवधाग्नि वदेत्स्वयम् ।
तुष्टोमन्त्रमयंसम्यक् साघ्र्यपुष्पाक्षतांजलिः ॥ ३१ ॥
ततःप्रभृतियाळाद्य ध्यानंन्यासादिकंविना ।
पूजनंमन्त्रमात्रेण यद्वितर्पणवर्जितम् ॥ ३२ ॥
योग्यतापदसिद्धयर्थं दत्तम्बिम्बेष्वुवास्थळे ।
सामान्यविधिनाचोस्तो गुरुणाचार्यपाच्युतम् ॥ ३३ ॥

सतयेतितदुक्तश्च मत्तस्येमुदितस्सदा ।
आलोचयंस्तु शास्त्रार्थ स्वमुद्रामुद्रितन्तुवै ॥ ६४ ॥
शस्त्यानिरीक्षमाणश्च योगक्षेमादिकंगुरोः ।
तदाराधननिष्ठस्तु सच्चित्तस्तत्परायणः ॥ ३५ ॥
स्वमाक्षिप्तस्तदादेशा न्मन्त्रमुद्राद्वयंविना ।
कीर्तयेर्यस्वगुरोर्ब्रूयात् ज्ञातंशास्त्रार्थ मुत्तमम् ॥ ३६ ॥
विचार्यस्वधियाखस्य वैष्णवानां हि संसदि ।
यथानैतिजनानांच मध्ये मात्सर्यभूमिताम् ॥ ३७ ॥
सशिष्यःपुत्रकोनाम स्वपुत्रादधिकस्सदा ।
साधकाख्येविशेषोय स्त मिदानींनिबोधमे ॥ ३८ ॥
पूर्वव छब्धदीक्षस्तु मन्त्राराधनतत्परः ।
स्नानादिना खिलेनैव देवभूतेन कर्मणा ॥ ३९ ॥
सिद्धये स्वात्मन श्चैव लोकानां सा [ रा ] धनाय च ।
वने वा यतनोद्देशे स्वगृहे वा मनोरमे ॥ ४० ॥
मन्त्रसेवाप्यदानं च कुर्या न्मन्त्रव्रतं महत् ।
परमः पालनीय श्च सेनैव समय स्सदा ॥ ४१ ॥
यदतीवच संलब्धं यच्छत्यानन्द मात्मनि ।
तदाश्चर्य न वक्तव्यं पूजापूर्व गुरौ विना ॥ ४२ ॥
आत्मीयमुद्रासंयुक्तो नित्योद्युक्त स्स्वकर्मणि ।
श्रद्धया य स्सबोद्धव्य स्साधको भगवन्मयः ॥ ४३ ॥
लिंगैः पूर्वोदितै युक्त स्त्वभियुक्तो विशेषतः ।
अनुग्रहार्थ गुरुणा भक्तानां विनियोजितः ॥ ४४ ॥
पदानि पदमन्त्राणां सार्थकानि च वेत्ति यः ।
वाच्यवाचकभावेन सांगनांगवशेन वा ॥ ४५ ॥
करविग्रहकल्हार पाक न्यासार्थ मेव च ।
समेन विषमेणैव सक् चित्रादिकेन च ॥ ४६ ॥

सङ्कर्षणः ।

ज्ञातोविभवदेवानां देवबीजगणोमया ।
अधुनाज्ञातु मिच्छामि तत्पिण्डनिचयोद्दियः ॥ २ ॥

श्रीभगवान् ।

यथाक्रमोदितानांच देवानांविनिबोधतु ।
पिण्डमन्त्रगणंमत्त स्सावधानेनचेतसा ॥ ३ ॥
नाभेरष्टमबीजंयत् स्थितन्तत्सप्तमोपरि ।
तदधश्चोत्तरंचाक्षा दरान्तेनविभूषयेत् ॥ ४ ॥
अथोत्तरंचाक्षदेशा दादायतदधोन्यसेत् ।
बीजंनेमेर्द्वितीयंयत् पञ्चमंमद्ध्येचतदासने ॥ ५ ॥
आधारषष्ठंसंरूढं कुर्याद्वैनाभिसप्तमम् ।
अरात्षष्ठस्यचोर्ध्वंतु नाभिपूर्वन्तुविन्यसेत् ॥ ६ ॥
सप्तमंचाष्टमंचापि ह्युपर्युपरिवैक्रमात् ।
अथाष्टमंनाभिदेशा दारूढंसप्तमोपरि ॥ ७ ॥
तदधोमध्यमंचाक्षनवमंपरिकीर्तितम् ।
भूयोरात्पंचम [ त ] स्योर्ध्वे दद्यान्नाभितृतीयकम् ॥ ८ ॥
बाह्यात्तृतीयन्तन्मूर्ध्नि पिण्डोयंदशमस्स्मृतः ।
द्वितीयंनाभिदेशाच्च तात्तृतीयंतदूर्ध्वगम् ॥ ९ ॥
नेमेराद्यन्तमूर्ध्वेतु स्मृतमेकादशंत्विदम् ।
अथोनाभिचतुर्थस्य सप्तमंविनिवेशयेत् ॥ १० ॥
तदधोनेमिपूर्वन्तु पद्वादशमंस्मृतम् ।
नेमेस्त्रिदशमादाय तदधोयोजयेत्क्रमात् ॥ ११ ॥
सप्तमं च चतुर्थं च पुन नाभे मंदामवे ।
अरा ष्षष्ठासना स्सर्वे पिण्डमेत्रयोदशम् ॥ १२ ॥

नाभे श्चतुर्थ मादाय तदूर्ध्वे सप्तमं न्यसेत ।
नवमं चापि तन्मूर्ध्नि एत द्विद्धि चतुर्दशम् ॥ १३ ॥
नेमे श्चतुर्थसंख्यस्य ऊर्ध्वाधोभ्या न्निवेश्य च ।
पर्ण नाभिद्वितीयं तद् तत्पंचदशमं स्मृतम् ॥ १४ ॥
यद्विंशसंख्यकं चाब्जा दाद्याराख्यमण्डलात् ।
सान्तिमेन च पष्ठेन वृत्तमायादनन्तरम् ॥ १५ ॥
नेमेस्सप्तमवर्णस्य ऊर्ध्वाधोभ्या न्निवेश्यच ।
नाभिदेशा द्वितीयं य द्विद्धि सप्तदशन्तु तत ॥ १६ ॥
नवमं नाभिदेशाच्च सप्तमस्योपरि न्यसेद् ।
यथाष्टमं नाभिदेशा त्कुर्या त्सप्तमंमूर्ध्वगम् ॥ १७ ॥
द्वितीयमपि तस्याथ तस्मा द्वे नाभिमण्डलात ।
अस्य त्रयोदृशा दूर्ध्वे न्यूनविंशतिमन्तु तद् ॥ १८ ॥
नाभे श्चतुर्थ तस्योर्ध्वे तत्तृतीयं तदूर्ध्वगम् ।
तत्रैव सप्तमं य द्वे विद्धि विंशतिमं विदम् ॥ १९ ॥
द्वितीयस्याष्टम न्नाभे वर्णस्योर्ध्वे नियोज्य च ।
अरा त्षष्टं च तस्याधः कुर्या त्तदनु लांगलिन् ॥ २० ॥
नवमं नाभिदेशाच्च तृतीयस्योपरि न्यसेत् ।
द्वितीयं तदधः कुर्या त्त्रयोविंशतिमं स्मृतम् ॥ २१ ॥
अष्टमं सप्तमं नाभे द्वितीयं प्रथमं ततः ।
क्रमेण योजये च्चैव अरा त्पष्टस्य मूर्धनि ॥ २२ ॥
नेमे स्सप्तम मादाय तदधो नाभिसप्तमम् ।
तत्तृतीयं च तस्याधः चतुर्विंशतिमं स्मृतम् ॥ २३ ॥
नाभे स्तृतीयं तस्योर्ध्वे द्वितीयं तस्यचोपरि ।
निवेश्य नेमिपूर्वन्तु षड्विंश मथुनोच्यते ॥ २४ ॥

तेषा मर्थवशा च्चैव विनियोगं हि वस्तुषु ।
ध्यानदैवतविज्ञाना द्व्यापकात्वन्तु चाध्वनि ॥ ४७ ॥
निर्लिंगं देवतानां च शब्दब्रह्मत्व मेवहि ।
यथावदनुजानाति स्ववर्णैः प्रागुदीरितम् ॥ ४८ ॥
सांकर्य मागमानां च वेत्ति वाक्यवशात्तु यः ।
तत्र वै त्रिविधं वाक्यं दिव्यं च मुनिभाषितम् ॥ ४९ ॥
पौरुषं चारविन्दाक्ष तद्भेद मवधारय ।
यदर्थाढ्य मसन्दिग्धं स्वच्छ मल्पाक्षरं स्मृतम् ॥ ५० ॥
तत्पारमेश्वरं वाक्य माज्ञासिद्धंहि मोक्षदम् ।
प्रशंसकं हि सिद्धीनां सम्प्रवर्तक मप्यथ ॥ ५१ ॥
सर्वेषां रंजकं गूढं निश्चयीकरणक्षमम् ।
मुनिवाक्यन्तु तद्विद्धि चतुर्वर्गफलप्रदम् ॥ ५२ ॥
अनर्थक मसम्बद्ध मल्पार्थं शब्दडम्बरम् ।
अनिर्वाहक मायोक्तं वाक्यं तत्पौरुषं स्मृतम् ॥ ५३ ॥
हेयं चानर्थसिद्धीना माकरं नरकावहम् ।
प्रसिद्धार्थानुवादं यत संगतार्थं विलक्षणम् ॥ ५४ ॥
अपिचे त्पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत् ।
एव मादेय वाक्योत्थ आगमो यो महामते ॥ ५५ ॥
सन्मार्गदर्शनं कृत्स्नं विधिवादं च विद्धि तम् ।
तत्प्रामाण्यात्तु यत्किंचित् समभ्यूह्य यथार्थतः ॥ ५६ ॥
पूर्वापराविरोधेन निर्वाहयति सर्वदा ।
भक्तानां चोदित स्सर्वं पदवाक्यप्रमाणवित् ॥ ५७ ॥
स्वमुद्रालंकृतश्चापि य स्सदा चक्रभृच्चरेत् ।
स देशिको नियोक्तव्य स्सर्वैं स्सर्वाधिको गुणैः ॥ ५८ ॥
वेदयत्यन्यथात्मानं योन्यस्मिन् योजितं पदे ।
फलापेक्षान्तु एदपे स पाति नरकेऽधमः ॥ ५९ ॥

नो भाजनं स्यात सिद्धीनां क्रमयागे कृते सति ।
स्व माचारं स्वकां जातिं स्वगोत्रं स्वगुरोः गृहम् ॥ ६० ॥
स्वपदं च स्वसंस्कारं माड्र् निषिद्धेन वै विना ।
गोरय त्यचिरा द्यो वै पातित्य मुपयाति सः ॥ ६१ ॥
तस्मा च्छ्रेयोर्थिना नित्यं नाभिमानं न तत्क्षपात् ।
अधरोत्तरता सम्य गाचर्तव्या च कुत्रचित् ॥ ६२ ॥

संकर्षणः ।

मुद्राचतुष्टयं देव कीदृग्लक्षणलक्षितम् ।
ज्ञायते यत्परिज्ञाना द्देशिकान्तं चतुष्टयम् ॥ ६३ ॥

भगवान् ।

यत्पूर्वन्नृहरेः मोक्तं शिरोमुद्रादिपंचकम् ।
तदंगुष्ठविनिर्मुक्तं विद्धि न्यूनांगुलैः क्रमात् ॥ ६४ ॥
चतुष्टयं चतुर्णान्तु गुर्वन्तानां यथास्थितम् ॥ ६४- ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्
अधिकारिमुद्राभेदविधि र्नाम

## द्वाविंशः परिच्छेदः ॥ २२ ॥



## अथ त्रयोविंशः परिच्छेदः ।



नारदः ।

कामपालेनदेवेश सत्वधर्माब्राह्मणसत्तमाः ।
चोदितोयत्तदधुना यथपार्मिसमासतः ॥ १ ॥

अरा त्पष्टासनं कुर्या द्वर्णनाभितृतीयकम् ।
तदूर्ध्वे सप्तमं चैव अतोन्य मवधारय ॥ २५ ॥
न्यूनं षड्विंशतिं नेमि स्तस्योर्ध्वाधोगतं न्यसेत् ।
सप्तमं नाभिवर्णेभ्य स्त्वरवर्गाच्च पंचमम् ॥ २६ ॥
नेमे राद्यद्वितीयं च आदाय तदधो न्यसेत् ।
मध्यमक्षा न्महाबुद्धे रष्टाविंशतिमं स्मृतम् ॥ २७ ॥
नवमं सप्तमं नाभे स्तृतीयं च तृतीयकम् ।
अथोत्तरस्य मक्षाच्च आदाय तदधो न्यसेत् ॥ २८ ॥
तृतीयं च द्वितीयं च नाभिदेशा दनन्तरम् ।
नाभिद्वितीय मादाय सप्तमं तुर्यमेव च ॥ २९ ॥
तृतीयस्याथ वै नाभे र्बाह्या दाद्यं तु मूर्धगम् ।
अक्षमस्याथ वै नाभे रध ऊर्ध्वे द्वितीयकम् ॥ ३० ॥
दद्या त्तदन्वरा त्षष्ठं तस्यैवाधोगतं तु वै ।
अरा त्षष्ठस्य चोर्ध्वेतु नाभिपूर्वं च तत्परम् ॥ ३१ ॥
विनिवेश्याष्टमं चापि षट्त्रिंश मवधारय ।
सप्तमं च तृतीयं च चतुर्थं नाभिमण्डलात् ॥ ३२ ॥
योजयित्वा तदूर्ध्वे चाप्यराणां त्रिदशं न्यसेत् ।
अथवा नवमं नाभे स्तृतीयं च द्वितीयकम् ॥ ३३ ॥
तत्सप्तत्रिंशकं विद्धि नाभिदेशा दथाहरेत् ।
अरा त्षष्ठासनं पूर्वं द्वितीयं च तदूर्ध्वतः ॥ ३४ ॥
नवमं चापि तस्योर्ध्वे पिण्डास्त्वथादिमं विना ।
अरान्तादयेन वै मूर्ध्ना सर्वे कार्या ह्यलंकृताः ॥ ३५ ॥
नमोन्ताः प्रणवाद्याश्च युक्ता स्संज्ञापदै स्स्वकैः ।
अरान्ताद्यं विना यस्य य ऊर्ध्वे यर्धते स्वरः ॥ ३६ ॥
अधोवानाभिपूर्वेण सद्दशा केवलं हितम् ।
अपारप च ततः कुर्या त्सर्वेषां पूजनाय च ॥ ३७ ॥

स्वेन स्वेनतु पिण्डेन सिद्धवच्चांगकल्पनम्।
नमः प्रणवसंज्ञास्याः जाति कर्मवशा त्पुनः॥ ३८ ॥
ज्ञातदुक्तात्तु यजनात मोक्षनिष्ठ स्समाचरेत्।
बीजपिण्डपदोत्थानां विनियोगन्तु चाखिलम्॥ ३९ ॥
किन्त्वेषां वैभवी मुद्रा देयाराधनकर्मणि।
तदंगमुद्रा श्चांगानां योज्या मन्त्रे स्स्वके स्सह॥ ४० ॥
... ... ... ... सैद्धमन्त्रोदितं मया।
दीक्षापूर्वं हि मन्त्राणां चातुर्वर्गं तथासनम्॥ ४१ ॥
लक्षणं पदमन्त्राणा मथेदानीं निबोधतु।
यै विना लब्धसत्ताना मर्चनं हि न जायते॥ ४२ ॥
विश्वातीताय विमलपदं विद्याविधायिने।
पद्मनाभाय वै विश्वव्यापिने तदनन्तरम्॥ ४३ ॥
चतुर्विंशाक्षरं विद्धि एतत्संख्यं परं श्रृणु।
ज्योतीरूपाय पंचार्णं पदं गगनमूर्तये॥ ४४ ॥
ध्रुवाय दद्या त्तदनु परमन्त्रयक्षरं ततः।
पदमाप्तिचतुर्वर्णं हेतवे त्र्यक्षरं त्विति॥ ४५ ॥
अनन्ताय पदं दद्या त्ततो परिमिताय च।
सर्वाश्रयाय तदनु तदन्ते धृतशक्तये॥ ४६ ॥
एतद्विंशतिसंख्यं च द्वाविंशं क्रमत श्श्रृणु।
नमो भगवते कृत्वा वासुदेवाय वै ततः॥ ४७ ॥
सर्वशक्त्यात्मने न्नन्तमूर्तयेतु पदं त्विति।
विद्यया [ द्या ] त्मने महाशब्दं पुरुषाय पदं ततः॥ ४८ ॥
मोहमायापदं चैव ततो विध्वंसिने तु वै।
सदोदिताय शब्दं तु सर्वशक्ति पदं ततः॥ ४९ ॥
नियोक्तव्यं चतुर्वर्णं सप्तविंशाक्षरं स्मृतम्।
पदं वेदविदे विश्वव्यप्रकाय ततो भवेत्॥ ५० ॥

तदन्ते विश्वपतये ततो वै परमात्मने ।
एष विंशतिभि वर्णैः शृणु सप्तदशाक्षरम् ॥ ५१ ॥
ज्ञानात्मने पदं कुर्याद संविच्छब्द मतः परम् ।
पदं प्रकाशाशयाय शान्तरूपाय वै ततः ॥ ५२ ॥
अनन्तशक्तयेसर्व व्यापिनेतदनन्तरम् ।
जगन्मयायतदनु विश्वरूपायवैपदम् ॥ ५३ ॥
एकविंशतिभिर्वर्णै रयमुक्तोपरंशृणु ।
सत्त्वसत्त्वपदमादाय गुहाशयपदंततः ॥ ५४ ॥
ततःपरमहंसाय ततोमानसचारिणे ।
न्यूनविंशत्यक्षरश्चैवा थातोयज्ञमूर्तये ॥ ५५ ॥
पदमादायतदनु विश्वान्तर्वर्त्तिनेतुवै ।
ततोभुवनशब्दन्तु वराहायपदंत्वथ ॥ ५६ ॥
विभूतिस्वामिनेचेति चतुर्विंशाक्षरस्त्वयम् ।
नमोभगवतेदद्या त्ततोवै [ वासुदादये ] वामबाधिये ॥ ५७ ॥
जहज्जलेन्धनपदं प्रदीप्तपदमेवतु ।
वीर्यायफट्तदन्तेतु एतत्संख्यसवर्यस्मृतः ॥ ५८ ॥
सर्वान्तश्चारिणेदद्याद प्रसन्नपदमेवच ।
मूर्तयेथतदन्तेवै दद्याद्धर्मात्मनेपदम् ॥ ५९ ॥
षोडशाक्षरमेतद्धि अतोगुह्यतमंशृणु ।
सर्वविद्येश्वरायाय दद्याद्वाक्पतयेततः ॥ ६० ॥
पदम्पदपदादाय ? [ विदेद्याद ] ततोवाग्विभवेयिति ।
न्यूनविंशाक्षरोह्येष स्वपरंकथयामिते ॥ ६१ ॥
योगैश्वर्यप्रदायाय योगनिद्रारतेतिच ।
निरतायपदंदद्या द्भगवान्जलशायिने ॥ ६२ ॥
त्रिरष्टवर्णसंख्यश्च अपमेकाधिकस्तुवै ।
भगवत्पदमादाय अनन्तपदशक्तये ॥ ६३ ॥

तेजोमयायभुवन भूतेयद्वचक्षरंपदम् ।
तदन्तेविनियोक्तव्यं पदंवैकच्छपात्मने ॥ ६४ ॥
षड्विंशार्णमिमंविद्धि मन्त्रंमन्त्रविदांवर ।
यज्ञांगदेहायाद्याय महापदमतःपरम् ॥ ६५ ॥
वराहायततोदद्यात् पुराणपुरुषायवै ।
दद्यात्ततःप्रजाशब्दं तदन्तेपतयेपदम् ॥ ६६ ॥
चतुर्विंशाक्षरंमन्त्र मेतन्मन्त्रविदांवर ।
नमोभगवतेकृत्वा नारसिंहायवैततः ॥ ६७ ॥
तेजोनिधेपदंदद्यात् पदंहनहनेतिच ।
ततोविकर्मजायंवै शब्दंपश्चाक्षरंभवेत ॥ ६८ ॥
दुष्कृतंदितदन्तेवै सप्तविंशाक्षरस्त्वयम् ।
आदायामृतमूर्तेवै ततोज्ञानवलात्मने ॥ ६९ ॥
सर्वेश्वरायभगव न्यूनविंशाक्षरस्त्वयम् ।
आदायपुण्डरीकाक्ष पदंवैपरमेश्वर ॥ ७० ॥
ततस्सकलशब्दन्तु सुखसौभाग्यवैपदम् ।
निधयेवांछितपदं ततस्सिद्धिप्रदेतिवै ॥ ७१ ॥
पदश्चाखिलदुःखेति ततस्तुशमनाप्रये ।
आनन्दसुन्दरपदं ततोलक्ष्मीपदंन्यसेत् ॥ ७२ ॥
पतयेशब्दमुच्चार्य पंचाशार्णस्त्रिरुज्झितः ।
सदसत्पदमादाय मूर्तयेतदनन्तरम् ॥ ७३ ॥
विश्वोत्तमायतदनु ततोमृतनिधेतुवै ।
षोडशार्णस्त्वयंमन्त्र उक्तःकान्तात्मनोविभोः ॥ ७४ ॥
पुरुषोत्तमायशब्दं ततस्सिद्धिप्रदेतिवै [ ततोमतिहृतेतिच ]।
शान्तयेचपदंदद्यात् सर्वेश्वरपदंततः ॥ ७५ ॥
समग्रोग्रभयेत्यत्र निवारणपदन्ततः ।
सप्तविंशाक्षरोमन्त्र उक्तश्चातःपरंश्रृणु ॥ ७६ ॥

नियन्त्रेपदमुद्धृत्य तदन्तेविश्वहेतवे ।
परब्रह्मसमेतश्च सेतवे श्रीमनन्तरम् ॥ ७७ ॥
मन्त्रोद्दिष्टवर्णश्च कथितोवक्ष्यतःपरम् ।
पदमप्रतिमेत्यादौ प्रभावन्तदनन्तरम् ॥ ७८ ॥
महाविभूतेतदनु महामायापदन्ततः ।
अथदर्शकशब्दन्तु तदन्तेसालकेतवे ॥ ७९ ॥
चतुर्विंशाक्षरोमन्त्र स्वयमुक्तस्समासतः ।
शान्तात्मनेपदंदद्या त्तदन्तेयमविन्यसेत् ॥ ८० ॥
नियमाश्रयायदद्या त्परमर्धिप्रदायच ।
नारायणायशब्दंते पूर्वसंख्यासमंस्मृतम् ॥ ८१ ॥
भवभंगपदंचैव कारिणेतदनन्तरम् ।
ततोभगवतेशब्दं दत्तात्रेयायचैततः ॥ ८२ ॥
वर्णाश्रमपदंचाथ धर्मशब्दमतःपरम् ।
परिग्रहायप्रणव मष्टाविंशाक्षरस्स्मृतः ॥ ८३ ॥
सर्वलोकमयायेवि सर्वज्ञायपदन्ततः ।
सर्वेश्वरायन्यग्रोध शयनायपदंत्वथ ॥ ८४ ॥
त्रयोविंशत्यक्षरश्च स्वयमन्यन्निबोधतु ।
भूतशब्दमथादाय भावनायतदन्ततः ॥ ८५ ॥
शब्दंविश्वात्मनेचाथ विमलेतिपदन्ततः ।
दद्याद्दिदितशब्दंवै तदन्तेविभवायच ॥ ८६ ॥
षड्विंशार्णस्वयंमन्त्रः परमस्मान्निबोधतु ।
भूतशब्दमथादाय व्यापिनेतदनन्तरम् ॥ ८७ ॥
पदंसहस्रार्चिषेतु दद्यात्पंचाक्षरंशुभम् ।
त्रिविक्रमायायपदं सर्वोपरिमितेतिच ॥ ८८ ॥
प्रभावायपदंदद्या त्त्रयोविंशाक्षरःस्मृतः ।
नरतापायशब्दन्तु पुरुषमपरायचे ॥ ८९ ॥

आत्मध्यानपरायेति णायवैद्व्यक्षरन्ततः ।
एकविंशाक्षरोमन्त्र स्ततोन्यमवधारय ॥ ९० ॥
नारायणायशब्दन्तु दद्यान्निरतिवैपदम् ।
शयानन्दमयायेति पदन्निरभिमानवै ॥ ९१ ॥
पदासक्तायतदनु पञ्चविंशाक्षरस्त्वयम् ।
परायपदमादाय ततोधिपरमात्मने ॥ ९२ ॥
योगेश्वरायहरये मन्त्रोयंषोडशाक्षरः ।
सप्तार्णपदमादाय प्राङ्नमःपरमात्मने ॥ ९३ ॥
कृष्णायशब्दंवदनु कमलंप्यक्षरन्ततः ।
दळशब्दन्तुवितत नेत्रायवदनन्तरम् ॥ ९४ ॥
ब्रह्मिष्ठायब्रह्मणेवै अष्टाविंशाक्षरस्ततः ।
भगवन्पदमादाय युगान्तदहनेतिच ॥ ९५ ॥
दीप्तयेपपदंदद्यात् संसारपदमेवाहि ।
बन्धविच्छेदकर्त्रेवै द्वाविंशार्णस्त्वयंस्मृतः ॥ ९६ ॥
पदंचतुर्मूर्तयेवै चतुर्गतिमयायच ।
शरशार्ङ्गभृतेदद्या च्छरदिन्दीवरत्विषे ॥ ९७ ॥
ततोभगवतेदद्या दभिरामपदन्ततः ।
शरीरायपदंचैव त्वष्टत्रिंशाक्षरस्स्मृतः ॥ ९८ ॥
दद्याद्विदितशब्दवै परमार्थपदन्ततः ।
ततोवेदविदेशब्दं विदुषेव्यापकायच ॥ ९९ ॥
स्वामिस्तदनुवैदद्या द्व्यक्षरंचापरम्पदम् ।
अयंविंशतिभिर्वर्णै स्त्वबसत्यन्यमतःशृणु ॥ १०० ॥
दद्याद्गरुडशब्दन्तु वदन्तेवाहनेतिच ।
सर्वशास्त्रोद्यतोयेवमतःशु [ शमयाशु ] भमयेतिच ॥ १ ॥
ततोधुनधुनादाय कर्मबन्धांस्ततोवदेत् ।
धर्मपाहिततोदद्या ज्जह्यधर्मंतदोवदेत् ॥ २ ॥

चतुर्विंशाक्षरोमन्त्र एषवक्ष्याम्यतःपरम् ।
संहारमूर्तयेशब्दं काळवैश्वानरार्चिषे ॥ ३ ॥
पाताळशयनायेति त्वज्ञाननिगळेतिवै ।
निचयंहनवीप्सातः प्रणवन्तदनन्तरम् ॥ ४ ॥
पश्चत्रिंशाक्षरोह्येष सर्वसिद्धिकरस्स्मृतः ।
प्रणवाळंकृतास्सर्वे नमस्काराविभूषिताः ॥ ५ ॥
संस्मृताःपूजिताश्चैव ध्याताजप्ताविशेषतः ।
तत्रास्तियत्रयच्छन्ति भक्त्यातत्कर्मणांभुवि ॥ ६ ॥
अथलांछनमन्त्राणां शास्त्राणांळक्षणंशृणु ।
सहस्रदीधितिपदं दद्याच्छुरितिवैततः ॥ ७ ॥
विग्रहायदशार्णंच ध्यधिकंमकुटस्यच ।
आदायवांछितपदं ततस्सिद्धिप्रदायवै ॥ ८ ॥
महाचिन्तापदंदद्या न्मणयेतदनन्तरम् ।
सिद्धिपंचदशार्णंच दशार्णमपरंशृणु ॥ ९ ॥
[ सर्वळक्षणशब्दन्तु ततस्सम्पत्प्रदायवै ।
ततश्चिन्तापदंदद्या न्मणयेतदनन्तरम् ] ॥ ११० ॥
सौभाग्यशब्दमादाय जननिष्पक्षरन्ततः ।
सर्वप्रदेतुतदनु अयमेषंदशाक्षरः ॥ १ ॥
प्राणात्मनेथसत्याय सिद्धिसप्ताक्षरंत्विह ।
काळकर्त्रेयचक्राय फडष्टार्णं प्रकीर्तितः ॥ २ ॥
विश्वात्मनेपदंदद्या त्ततोविश्वप्रदायच ।
नवाक्षरमिदंविद्धि परमष्टाक्षरंशृणु ॥ ३ ॥
समादायपदंविघ्ने ततोविघ्नेश्वरार्चिते ।
प्रासशब्दमूर्तयेकुर्या च्छंखायाष्टाक्षरःस्मृतः ॥ ४ ॥
पद्मसनिधेगुप्तांत् भीष्मशब्दमतःपरम् ।
भीषणायतदन्तेथे दशाक्षरमिदंस्मृतम् ॥ ५ ॥

प्राग्भुवनाधिपतये स्तम्बभूतायवैपदम् ।
त्रयोदशाक्षरंविद्धि ततोन्यमवधारय ॥ ६ ॥
पदमिन्द्रियकोशाय इप्वस्त्रायदशाक्षरम् ।
कल्पान्तानिळघोषाय विद्युल्लासितवैपदम् ॥ ७ ॥
प्रभापर्यायडशार्णन्तु नवाक्षरमतश्शृणु ।
महामायापदं दद्या द्वन्धवर्ण द्वयं ततः ॥ ८ ॥
ध्वंसिने पद मादाय एतत्संख्यम्पदंशृणु ।
सर्वास्त्रग्रसनादाय पराय तदनन्तरम् ॥ ९ ॥
सन्तापकायशब्दन्तु दर्पविध्वंसिनेततः ।
एकादशाक्षरं विद्धि नवाक्षरमथोच्यते ॥ १२० ॥
अज्ञान खण्डनपदं परायतदनन्तरम् ।
त्रैलोक्यमोहनपदं मूर्तयेतु नवाक्षरम् ॥ १ ॥
आकर्षणपरपदं महामाया मयेतिवै ।
द्वादशाक्षर संख्यस्तु नवाक्षर मथोद्धरेत् ॥ २ ॥
प्रागखण्डित शब्दन्तु तदन्ते विनियोज्यच ।
पराक्रमायशब्दन्तु समाक्षरमतश्शृणु ॥ ३ ॥
दर्पप्रशमकर्त्रेतु पश्चार्ण विनियोधवै ।
तेजोमालिनिचेत्येत द्वाविंशत्यनुकीर्तिताः ॥ ४ ॥
प्रावदाद्यन्तसंरुद्धाः स्वनामपदभूषिताः ।
संख्यानिष्ठाक्षरस्यान्ते दद्यात्संज्ञा पदं सदा ॥ ५ ॥
चक्रवच्चात्र मन्त्राणां कुर्यान्नामा वधानकम् ।
क्रमाच्चतुर्दशानान्तु शतयन्तानाश्चफट्पदम् ॥ १२६ ॥

इति श्रीपांचरात्रे श्रीसात्वत संहितायां
विभवदेवता मन्त्रोद्धारविधि र्नाम

## त्रयोविंशः परिच्छेदः ॥ २३ ॥

---

# अथ चतुर्विंशः परिच्छेदः ।

श्रीनारदः ।

बिम्बप्रधाना श्रुत्वैवं मन्त्राणां लक्षणं स्फुटम् ।
चोदितो भगवानेवं पुन र्वै तालकेतुना ॥ १ ॥

संकर्षणः ।

ब्राह्मणः क्षत्रियो वैश्य शूद्रोवा भगवन्मयः ।
नित्याराधनका मस्तु यदि मन्त्रमयं वपुः ॥ २ ॥
कर्तु मिच्छति लक्षार्थं तत्र किं लक्षणो विधिः ।

श्रीभगवान् ।

चित्रमृत्काष्ठशैलोत्थं सल्लोहमय मेव वा ॥ ३ ॥
भेदभिन्नं द्विजातीनां हितं बिम्बं फलार्थिनाम् ।
तदभिन्न मकामानां प्राप्त चाप्यविरोधकृत् ॥ ४ ॥
अत्र चित्रमयं विद्धि भित्तिकाष्ठाम्बराश्रितम् ।
पूर्वं वर्णक्रमेणैव चतुर्धाचाम्बरोत्थितम् ॥ ५ ॥
वस्त्र कार्पासकौशेय क्षौमशाणमयन्तु वै ।
मृज्जमेवं सिताद्यायं वार्क्ष विविध मेव च ॥ ६ ॥
श्रात्थायं ब्रह्मवृक्षोत्थं श्रीपर्णी सुरदारुजम् ।
षा[ शा ]लताल मयं चैव शाशर्व[शैशुपं]न्ती न्दुसारजम् ॥ ७ ॥
एवं द्वयं द्वयं विद्धि द्विजादीनां यथाक्रमम् ।
भवोन्ये दृढमुख्या श्च सारवन्तो हि याज्ञिकाः ॥ ८ ॥
साधारणा श्चतुर्णान्तु प्रतिमाद्ये च कर्मणि ।
सामान्यं मुक्तिमुक्त्यर्थं मम मृण्मयवास्मृतम् ॥ ९ ॥

तारहाटकताम्रोत्थ मारकूटमयं तथा ।
एवं हि भूमयो वस्त्रपाषाणा धातवो द्रुमाः ॥ १० ॥
यज्ञादयो खिला रत्ना स्वितरक्तादिलक्षणा ।
असामान्याः फलेप्सूनां लाभालाभवशा त्पुनः ॥ ११ ॥
सम्यक् स्वमूर्तिमन्त्रैस्तु जपहोमार्चनादिना ।
नये त्सामान्यभावित्व तथा तत्कारणार्चनात् ॥ १२ ॥
यजेत् सेन्द्रां धरां शैल मृदापादनकर्मणि ।
एवं पटद्रुमार्थन्तु वरुणं सवनस्पतिम् ॥ १३ ॥
सरत्नानां च धातूनां सम्बन्धैर्केन्दुपावकान् ।
रत्नाश्रयेण धातूत्थे [ स्वर्ये ] नार्च्यादेशेन वै विना ॥ १४ ॥
तथार्चनासनेनैव चक्रपद्ममयादिना ।
नराली प्रतिमा शस्ता ध्यायिनां ध्यानसिद्धये ॥ १५ ॥
केवला लघुमाना च प्रमाणावयवोज्झिता ।
वर्णाश्रमगुरुत्वाच्च स्वामित्वा दखिलस्य च ॥ १६ ॥
भूतादिदेवरूपत्वाद उक्त मायेषु वस्तुषु ।
नृप श्चार्हति वै नित्यं सविशेषपदे स्थितः ॥ १७ ॥
किं पुन र्यो फलाकांक्षी भक्तिश्रद्धापर स्सदा ।
कुर्वेवं बिम्बबिम्बार्थी यत्नेनेदं समाचरेत् ॥ १८ ॥
गुह्यकान् गृहदेवांस्तु हृदार्च्याघ्यादिना पुरा ।
मलभस्मतुषांगार केशकीटनखा स्तृणम् ॥ १९ ॥
मूलकण्टकचर्मास्थि सामान्ये श्मश्रिभित्तिका ।
भवत्यनर्थदावश्य मतः प्राक्चतुरंगुलम् ॥ २० ॥
विहाय मृद्दलं भित्ते रीर्षाद्विम्बात्तु चाधिकम् ।
उक्तदोषविमुक्ताय पंचगव्येन साम्भसा ॥ २१ ॥
मर्दितया मृदा भूय स्तद्भित्त्यंशं प्रपूर्य च ।
शस्त्रेण काष्टफलकां मृगचर्मसमां पुरा ॥ २२ ॥

छांवं विहाय शुद्धयर्थं तुरी मुक्तन्तु वै घटम् ।
प्रक्षाळ्य सलिलेनैव स्वस्त्रजतेन सप्तधा ॥ २३ ॥
हृन्मन्त्रेणतु सास्त्रेण मूर्ति मन्त्रांचितेन च ।
तीर्थोद्देशा न्नदीतीरा त्पुण्यक्षेत्राच्च पर्वताल ॥ २४ ॥
अपास्य दोषसकीर्णां मूर्ध्वां दादाय मृत्तिका ।
सावचूर्ण्याथ संशोध्या सुपलिप्ते धरातळे ॥ २५ ॥
शाण मौर्णं च कार्पासं सूत्रं चाळवि [ ससूत्रं चावि ]जं तथा ।
कृत्वा पाषाणभिन्न प्रा ग्योऽयं तत्र सवाळुकम् ॥ २६ ॥
ईषद्द्रामयुक्तेन भूरिक्षीरघृतादिना ।
भावये त्पंचगव्येन खादिरेण कषेण च ॥ २७ ॥
सिद्धार्थकालसिस्नेह विलोत्थेन च वै सह ।
क्लेदयेच्च त्रिसप्ताहं भाण्डे कृत्वा यसादिके ॥ २८ ॥
मारुतानलसूर्येन्दु दर्शनेन विनैवाहि ।
तया समाप्यं तद्बिम्बं शुभकाष्ठान्तरीकृतम् ॥ २९ ॥
वस्त्रवच्चैव लोहानां कृत्वा प्रक्षाळनं ततः ।
मार्जनं भूतिना भूय स्तथा तन्मन्त्रितेन च ॥ ३० ॥
भक्त्या प्रवर्तमानस्तु विम्बसाधनकर्मणि ।
सर्वत्र चास्त्र मन्त्रस्य कुर्या त्रिर्विघ्नशान्तये ॥ ३१ ॥
पूजन हवनं भूत बलिदानं सदक्षिणम् ।
सम्यक् [ न्मृद् ] ग्रहणकालेतु एत त्सामान्य मेव हि ॥ ३२ ॥
सच्छैलदारुग्रहणे विशेष स्त्वधुनोच्यते ।
सर्वत्रारम्भकालेतु निमित्त मुपलक्ष्य च ॥ ३३ ॥
विशेषा द्द [ र्च ] नया धार्यां तच्छुभेन शुभोदयः ।
अशुभेन निमित्तेन यात्रा विघ्नवती भवेत् ॥ ३४ ॥
विरामेणतु जप्येन शान्तिस्वस्त्ययनादिना ।
निवर्तनेन सद्धन्या ददते शुभकृद्यतः ॥ ३५ ॥

मन्त्र मभ्यर्च्य यात्राया मभ्यर्थ्याज्ञां विनम्य च।
नैवेद्यशेषभुग्याम चास्थ स्संयतेन्द्रियः॥ ३६ ॥
प्राङ्मुख स्संस्मरे न्मन्त्रं समुत्थायामृतोदये।
परिज्ञाय पुरा मूर्ति तन्मूर्त्यन्तर मेव वा॥ ३७ ॥
याया त्तदीयं दिग्भागे तदभावात्तु चान्यदिक्।
सहायै रप्रमत्तैस्तु शिल्पिभि स्सह संवृतः॥ ३८ ॥
लाजदध्यक्षतैः कुम्भै र्याया त्पुष्पपुरस्सरैः।
सौमनस्यं महोत्साह स्त्वंगस्पन्दश्च दक्षिणः॥ ३९ ॥
शुभा वाणी ध्वनि श्शांख स्तन्त्री वाद्यं फलादयः।
गोगजाश्वद्विजाः कन्या नवभाण्डं च मृदधि॥ ४० ॥
आर्द्रमांसान्यलंकारो मदिराश्री घृतं पयः।
सिद्धान्नं शालिर्बीजादि दभा स्सतुमनस्त्री॥ ४१ ॥
छत्रवस्त्रध्वजायान रोचना कुंकुम मधु।
दर्पणं चामर श्चैव धातव श्शास्त्रवर्जिताः॥ ४२ ॥
रत्नानि वैदुर्य विम्बं मधु मत्तो झकातरः।
जीवन्मत्स्या निमित्तश्च मनसो यदसेददम्॥ ४३ ॥
तत्सर्व दर्शने श्रेष्टं तत खेदद मशोभनम्।
स्वगृहद्वारदेशाच्च पथि सप्तपदावधि॥ ४४ ॥
क्रममाणे निमित्तं च फलं यच्छ यनेन हि।
निर्गत्य नगरा द्ग्रामा त्क्रोशार्ध क्रोश मेव वा॥ ४५ ॥
गृह्णीया च्छाकुनं चिह्नं नकुलादिनयं त्वतः।
पूर्णा स्सार्थाधिका त्क्रोशाद दितक्न्मृगदर्शनम्॥ ४६ ॥
दिङ्मुखे निर्मले सिद्धि र्व्रजे यत्र विशेषतः।
असकृद्याम्बरं स्वच्छ सुदीप्ता भास्करादयः॥ ४७ ॥
मन्दासुखायदस्निग्धः प्रदक्षिणगतिस्स्थिरः।
दिव्याद्युत्पातनिर्मुक्त स्सकालसिद्धिसूचकः॥ ४८ ॥

हंसशुको भरद्वाजः कोकिलः खंजरीटकः ।
मयूरो भ्रमर श्वेत पाकाद्याः खेचरा शुभाः ॥ ४९ ॥
भूचरानकुलास्सौम्या सितादि शृंदगोधिका ।
गन्धागुर्जम्बुकश्चैव सर्वेषां दर्शनं शुभम् ॥ ५० ॥
मृगाणां हरिणास्सिद्धो व्याघ्रश्शशकचित्रकाः ।
सिद्धिसंसूचकास्सर्वे सर्वेषां विदितन्तुवै ॥ ५१ ॥
प्रदक्षिणं विशेषेण व्यापये जम्बुक शुभः ।
द्विजादिकं [ दीनां ] हतं स्निग्धं सिद्धिकृतसौख्यदम् ॥ ५२ ॥
समुत्पन्ने निमित्तु धातुसंक्षेपकर्मणि ।
प्रतीक्षितुं नपुश्चैव यदाशान्ति तदाचरेत ॥ ५३ ॥
पूर्वोक्तां चित्तशुद्धयर्थं सविशेषां सदक्षिणाम् ।
प्रविश्यविधियाक्षेत्रं निरीक्षेत स्वतेजसा ॥ ५४ ॥
पश्येच्छिलांगुणवतीं सर्वकाकर्मणिक्षमम् ।
वर्जयेदतिवृद्धाश्च परीक्षीणावर्चंसया ॥ ५५ ॥
सभङ्गांदावदग्धांच निश्शब्दां रूक्षविग्रहाम् ।
सवालुकांच सच्छिद्रां बिन्दुयुक्तांपुरोद्वहाम् ॥ ५६ ॥
आखुदर्दुरमीनादि मार्जारशशकोपमाम् ।
सुवर्णपरवर्णांश्च सिराजालेन सन्ततां ॥ ५७ ॥
प्रागुक्तरूपस्याभावा दर्मीषांमद्वर्णहितम् ।
पारावतशुकाब्जाभा मधुमाञ्जिष्ठमाषभा ॥ ५८ ॥
गुर्वीहृद्याशुभास्निग्धा अतोवान्याभिशस्यते ।
सुहृद्ये भूतले मग्ना जलाशयतलस्थिता ॥ ५९ ॥
छत्रातरुवरेणैव वनराजिष्ववस्थिता ।
वेष्टितावल्लिवृन्देन तथैवौषधिभिर्वृता ॥ ६० ॥
ऊर्ध्वगाजानदेशाच्च एकपिण्डीकृताभृगोः [ मृदुः ] ।
मोक्षदाचखवक्त्रावे भोगदासुतलानना ॥ ६१ ॥

दिङ्मुखीचोभयकरी प्राङ्मुर्धाभूतिरावुवे ।
अतोन्यमस्तकाकीर्ति यशोवृद्धिकरीमता ॥ ६२ ॥
वंशवृद्धिदमारोग्य शान्तिकृत्कंयदाप्यदिक् ।
पुष्टिमुन्नतिसन्मेधां यच्छत्युत्तरमस्तका ॥ ६३ ॥
एवंपुरापरिज्ञाय पृष्टोध्वरणंशिरः ।
बलात्मनावर्वीर्येण प्रोद्धरेयत्सहशिल्पिभिः ॥ ६४ ॥
प्राङ्मुखंचोत्तरस्यांवै प्राग्भागेचोत्तराननम् ।
स्थलेवतार्यमन्त्रेश मिष्टास्रक्चन्दनादिना ॥ ६५ ॥
ध्यात्वाशिलान्तस्संरुद्धं सम्पूज्यजुहुयात्ततः ।
उक्तदिग्व्रितयस्यैक देशेकुण्डेथवास्थले ॥ ६६ ॥
दाथापूर्णाहुतिध्यान जपयुक्तःक्षपेदहः ।
निशागमेर्चनंकुर्या द्बलिभिर्भूततर्पणम् ॥ ६७ ॥
नैवेद्यशेषमश्रीया न्मन्त्रविन्यस्तविग्रहः ।
तद्दक्षिणेनदर्भेषु प्राक्छिराःप्रस्वपेज्जपन् ॥ ६८ ॥
पूर्ववरस्वप्नलाभार्थ मुत्थाय रजनीक्षये ।
कुर्याश्स्वकार्यं जुहुया दशुभस्वप्नशान्तये ॥ ६९ ॥
अभिनन्द्य शुभे स्वप्नं हृद्यावर्जकं स्फुटम् ।
पर्वतं च स्व मात्मानं स्थाने सदुपलं स्थलम् ॥ ७० ॥
स्फटिकामलसंकाशं पश्ये द्वा तप्तहेमवत् ।
निर्धूमांगारकूटाभं तदाशु लभते शुभम् ॥ ७१ ॥
सशस्त्र मथ चादाय मुद्गरं चास्त्रमन्त्रितम् ।
प्राङ्मुखश्चतुरो वारां स्ताडयेन्मस्तकावधेः ॥ ७२ ॥
पाददेशाच्च वा मध्या दंवस्य च फलं पुरा ।
चतुरश्रायतां कृत्वा भिन्नां पीठेन पन्नगाम् ॥ ७३ ॥
आनाय्य वा पृथक्पीठां छन्नां कर्मालयं शुभम् ।
विन्यस्य वै पुरा तेन विधिना चोद्धरे च्छिलाम् ॥ ७४ ॥

पीठार्थं भिन्नवर्णां च तद्रूपां वा यथेच्छया ।
अंगांगिभाव गुणव द्दपदां तु महामते ॥ ७५ ॥
काष्ठलोहमणीनां वा ह्यलाभे सति वै शुभम् ।
सति लाभे न वै कुर्यात् द्रव्यस्य व्यत्यय च वा ॥ ७६ ॥
तत्काल मेव चालय रत्नाधारां शिलां शुभाम् ।
पुंस्त्रीनपुंसकोत्थाभि शिलाभि स्स्यात्तथा [त्रितयं] हितम् ॥७७॥
बिम्बाख्यं विद्धि चाभावात् सर्व बिम्बो पलात्तु वै ।
निषिद्धं भगवद्बिम्बं रत्नपीठमयोपलात् ॥ ७८ ॥
लक्ष्म्याद्या देवताकारा स्त्रीपला स्सर्वसिद्धिदाः ।
या हता ऽ नलबिन्दून्वै सनाद मभिमुंचति ॥ ७९ ॥
पुमानिति शिला सा वै निस्तेजा स्स्वना ऽ बला ।
आदिमध्यावसानेषु नाग्नि र्यस्या नच ध्वनिः ॥ ८० ॥
नपुंसकेति सा ज्ञेया स्वपदस्था फलप्रदा ।
शिलाग्रहण मित्युक्त दारुग्रहण मुच्यते ॥ ८१ ॥
आपर्वतान्तसञ्चारो निर्व्रणो सरल बृहत ।
रोग मुक्तं न विज्ञाये माहूनख स्सक्षतीकृतम् ॥ ८२ ॥
नानिलाशनिदावाग्नि हतवीर्यं न बाह्यगम् ।
सलक्षणेतु सुस्निग्धे भूभागे चोन्नते स्थितम् ॥ ८३ ॥
प्रागवत्तमधिवास्यादौ परेद्दन्यर्चयेत्ततः ।
तदाश्रिता मविज्ञात स्वरूपां देवतां पठन् ॥ ८४ ॥
इहाश्रिताग्ने तुभ्यं नम स्सर्वेश्वराय च ।
क्षमस्वावतरान्यत्र सन्तिष्ठात्र चिदात्मना ॥ ८५ ॥
अथास्त्रोदकशुद्धेन विलिप्तेन घृतादिना ।
जपन् मन्त्रवरं चोपद् छिन्द्या द्वै क्रकचादिना ॥ ८६ ॥
प्राच्या मुदीच्या मैशान्या पतत्यभिमुखं यदि ।
परिज्ञेयं शुभं कुर्या दन्यपार्चनादिकम् ॥ ८७ ॥

अनाद्या देवभागं वा प्यनादेयेन वै विना ।
विम्ब मिच्छन्ति वै कर्तु वार्क्ष चैवाति विस्तृतम् ॥ ८८ ॥
अनेकभुजवक्त्राख्रभूषितं तत्तत्स्थितैः ।
भिन्नै स्वयवै र्मान युक्तै र्दु [ शि ] ष्टै र्न दूष्यति ॥ ८९ ॥
भक्ति श्रद्धा यथाश्चैव सर्वं चार्ण मयं यतः ।
एवमेकतमस्यापि भक्तिपूर्वस्य वस्तुनः ॥ ९० ॥
संग्रहंच पुराकृत्वा कुर्यादाकारमीप्सितम् ।
तादर्थ्येनतुसामान्यं सौम्यमानं पुराश्रृणु ॥ ९१ ॥
ऋज्वाख्य मविकारंच व्यापक मेकमूर्तिमत् ।
भूभागे सुसमेश्लक्ष्णे मानमुद्दीयतंनवे ॥ ९२ ॥
निरूप्यावयवानांच लक्ष्मविस्तृतिपूर्वकम् ।
अष्टाधिक शतांशोय स्स्वोन्नतेरङ्गुलश्चतत् ॥ ९३ ॥
द्वे अंगुलेकलानेत्रं गोलक भावएवच ।
अंगुला दष्टभागोय स्सयवः परिकीर्तितः ॥ ९४ ॥
षट्कलंचपरिज्ञेयं ताल विम्बादि कर्मणि ।
मुखांगनाभि मेढ्रक्ष्मा स्तालमाना स्त्वथोरुयुक् ॥ ९५ ॥
द्विकलेच तथाजंघे गुल्फजानुर्गलंचकम् ।
त्र्यङ्गुलं ऽङ्गुलज्ञेय मित्युन्मान मुदाहृतम् ॥ ९६ ॥
जटाधराणां विम्बानां दीर्घह्रस्व वशेनतु ।
चतुष्कलंच त्रिकल मानम्मानाद्बहिः क्षिपेत ॥ ९७ ॥
त्रिपंच ससशिरसो मौलिरष्टकलोन्ततः ।
निर्जटानां ललाटोर्ध्वे मकुटवा सुशोभनम् ॥ ९८ ॥
तालेन ह्रासवृद्धीतु कार्यंत्वत्र व्यपेक्षया ।
यथोदितेषु भागेषु एकैकेनां गुलेनतु ॥ ९९ ॥
आस्यनासा ललाटार्ध वदनांशंभजेत्रिया ।
ततोग्रतः कलामानं प्राणस्या तिलपुष्पवत् ॥ १०० ॥

कळार्धेनतुविस्तार स्सोन्नतिस्तत्पुटद्वये ।
नासाग्र ग्रासनिर्मुक्तं गोजीमानं चतुर्यवं ॥ १ ॥
तच्चतुर्यवमानेन घ्राणाग्रेणान्तरीकृतम् ।
अर्धांगुळंचोत्तरोष्ठ मधरोष्ठन्तुचांगुलम् ॥ २ ॥
गोळकंचिबुकंविद्धि सृक्किण्यौ चतुरंगुळे ।
आद्यस्य नासिकांशस्य मध्यभाग समाश्रिते ॥ ३ ॥
कुर्यान्नेत्रश्रुतिच्छिद्रे तन्ननेत्रे कळान्तरे ।
कळायामसमन्देर्घ्यात कळार्धेनतुविस्तृतम् ॥ ४ ॥
यदुत्पळ दळाकारं द्वियवेनाधिकन्तुतत ।
कुर्यात्पद्म दळाकारं नेत्रार्ध वृत्ततारकम् ॥ ५ ॥
तारादैर्घ्यत्रिभागेन त्वाद्यस्यान्यस्यपधिका ।
यवेने केन सार्धेन ज्योतिस्तत्पंचभागिकम् ॥ ६ ॥
त्रिभागेनापि विहितं तत्पद्मदळलोचन ।
द्विसप्तयवनेत्रकोशं विस्तारेणयवाधिकम् ॥ ७ ॥
सार्द्धांगुळद्वयंदैर्घ्यात् भ्रूळते द्विकळेस्मृते ।
मध्यतो द्वियवेबाळ चन्द्रतुल्ये क्रमस्तते ॥ ८ ॥
तदन्तरं कळार्द्धंच तारकोटी समसूत्रके ।
श्रोत्रद्वयंगुळविस्तीर्णे आयामेन द्विगोळके ॥ ९ ॥
द्वियवः कण्ठपरिधिः पर्वणीद्वे चतुर्यवे ।
मध्यन्ताभ्यां तथाविद्धि श्रोणीसार्द्धांगुळान्वते ॥ ११० ॥
कळार्धेनतुतच्छिद्रं पाशमानं यथारुचि ।
अंगुळाद्विकळान्तस्तु वैषम्यमपि तत्रयत ॥ १ ॥
अन्तश्छिद्र विनिर्मुक्तं वद्धिसेयं चतुर्यवम् ।
सदक्षं कर्णोपेत मेवं श्रोत्रद्वयं स्मृतम् ॥ २ ॥
चतुष्कळं ळलाटन्तु शिखरे द्वे द्विगोळके ।
ह्यच्छाया स्त्र्यंगुळेचैव अग्रतांगुळ विस्तृते ॥ ३ ॥

केशभूमेस्समुद्भूतं ललाटोपरिसंस्थितम् ।
कुर्यात्कलार्द्धमानन्तु वक्रव्यालकसंचयम् ॥ ४ ॥
कपोलपरिधिं कुर्यात्कर्णात्कण्ठगतं समम् ।
तन्मध्ये वर्तुलौ गण्डौ परिच्छिन्नौ पुरोदितैः ॥ ५ ॥
शिरसःपरिणाहन्तु विद्धि षट्त्रिंश दंगुलम् ।
श्रोत्रकोटिद्वयाच्चैव मस्तकस्य यदन्तरम् ॥ ६ ॥
तत्षोडशांगुलंविद्धि वर्तिभ्यां पृष्ठतस्तथा ।
सार्द्धतालंपरिज्ञेयं ललाटात्कगुहान्तरम् ॥ ७ ॥
सत्कम्बुसदृशीग्रीवा मूलमध्याग्रतोद्विसा ।
परिधे द्वादशकला एकविंशांगुलाग्रतः ॥ ८ ॥
अष्टादशांगुलाचैव स्वांशात्त्रयंशेनविस्तृता ।
तन्मूलं विस्तृतौस्कन्धौ तुंगौ वृत्तायतौ समौ ॥ ९ ॥
षडंगुलन्तद्वाहुल्यं बाहुमान मथोच्यते ।
स्कन्धोत्तमांगं त्रिकलं सन्ध्यन्तं षट्कलं स्मृतम् ॥ १२० ॥
स्कन्धेर्वैमणिबन्धान्तं मानं नवकलं स्मृतम् ।
मणेर्मध्यमशाखान्तो हस्तास्सप्तांगुलोमतः ॥ १ ॥
परिज्ञेयं कलाहीनं तन्मानम्मध्यमांगुले ।
तच्चतुर्यवहीनाच सानामानुप्रदेशिनी ॥ २ ॥
द्विकलाचपरिज्ञेया सांगुष्टातुकनीयसी ।
द्विपर्वाचस्मृतांगुष्ठ स्सर्वाश्चांगुलिविस्तृताः ॥ ३ ॥
सर्वासांमूलपर्यन्ता ह्रासयेच्चयवंयवम् ।
अग्रपर्वार्द्धमानेन कार्यालिंगोपमानखाः ॥ ४ ॥
मानमंगुष्टमूलस्य परिधेश्चतुरंगुलम् ।
तच्चतुर्यवहीनंच ज्ञेयंत्रिष्वंगुळीषुच ॥ ५ ॥
मूलां [ न्यूनांगुले ] गुले-कलाशार्द्धा प्राग्वत्स्रासश्च वेष्टनात् ।
अंगुष्ठमंगुलंचाप्या त्रिस्रोन्याष्पञ्चयवास्मृताः ॥ ६ ॥

अर्धांगुळ ग्रतोन्यूना विद्धिमध्यं क्रमक्षतम् ।
नजळक्ष्मी [ चकक्षा ] यमंचाग्रात् सांगुलं द्विकलंकरम् ॥ ७ ॥
ईषन्निम्नतलंचैव लक्ष्मरेखाविभूषितम् ।
शाखामूलावधेःपाणौ बाहुरयन्द्वंयवेंगुलम् ॥ ८ ॥
चतुर्यवाधिकंचैव मणिबन्धावधेस्स्मृतम् ।
मध्येकलार्धहीनन्तु तद्बाहुलयमुदाहृतम् ॥ ९ ॥
मणिबन्धावधेर्बाह वेष्टनषट्कलंस्मृतम् ।
सन्धेस्सप्तकलंविद्धि सांगुलत्रयवमप्युतम् ॥ १३० ॥
हीनमध्यांगुलेनैव मूल.द्वैनवगोळकम् ।
तथैवसन्धेरूर्ध्वन्तु विस्तारः प्राग्वदत्रच ॥ १ ॥
अत्रापि पूर्ववत् दृष्टा कार्यान्तस्था क्षिति स्स्वयम् ।
तालं गळावधे स्त्यक्त्वा तन्मानेनान्तरीकृते ॥ २ ॥
स्तनद्वयं समं कुर्या त्तद्वारा च समांसळा ।
निम्नं हृद्गोळकार्धेन ऊर्ध्वतो रत्नराञ्युतम् ॥ ३ ॥
स्तनाभ्यां त्रिकलौ पार्श्वौ त्रियवं स्तनमण्डलम् ।
यवोन्नतं तयाचाग्रात् विस्तृत तेन चूचुकम् ॥ ४ ॥
लोचनं त्रियवं सार्ध कक्षमान मुदाहृतम् ।
स्कन्धमानविनिर्मुक्त पृ [ प ] ष्ठमंसावधे स्स [न्शा] मम् ॥ ५ ॥
द्रोणीनिकाशसदृशं मध्यराशे स्समांसलम् ।
कक्षान्तर्वेष्टनं विद्धि पंच तालं सुलोचनम् ॥ ६ ॥
विनांगुलद्वयेनैव द्वे ताले द्विगुणीकृते ।
यवत्रयसमायुक्त विद्धि तत्कुक्षिवेष्टनम् ॥ ७ ॥
त्रियवोनेकलामानं विज्ञेयं नाभिमण्डलम् ।
तन्मानःत नवयोनःतु तन्निम्नत्वं विधीयते ॥ ८ ॥
परिधि र्नाभिमध्येतु त्रिवाढ स्स विलोचनः ।
षड्गोळकंच तन्मानपरिद्वियर्व कटे स्मृतम् ॥ ९ ॥

करिकुम्भोपमौ पीनौ परितः पंच गोळकौ ।
स्फिजौ कौपीनराजीच द्वयंगुळा मूळतः स्मृता ॥ १४० ॥
परितोंगुळमाना सा मेढ्रन्तु त्रिकळं स्मृतम् ।
चतुर्यवश्च तत्कोशं वेष्टनन्तु षडंगुळम् ॥ १ ॥
द्वयंगुळौ वृषणौ दैर्घ्यान्मूळान्तसमविस्तृतौ ।
परितो द्वियवं [ द्वयंगुळं ] विद्धि वायुरन्ध्रं सुवर्तुळम् ॥ २ ॥
ऊरुमानं परिज्ञेयं मध्यभूमे नवांगुळम् ।
षट्कळं मूलदेशाच्च अग्रान्तं त्रिकळं स्मृतम् ॥ ३ ॥
हीनमेकांगुळेनैव द्विकळं जानुमण्डलम् ।
विस्तारेणोन्नतत्वेन चतुर्यवसमन्तु तत् ॥ ४ ॥
जंघामूले परिज्ञेयं वेष्टनं नवगोळकम् ।
द्विसप्तांगुळक मध्ये सार्धपंचांगुळं [ कळं ] ततः ॥ ५ ॥
अत्रापि वेष्टना द्विद्धि तृतीयांशेन विस्तृतिम् ।
मध्यमूलावसानेभ्यो विस्तार मनुगुण्यतु ॥ ६ ॥
भुजाभ्यां मध्यदेशस्य तथांगुळिगणस्य च ।
ऊरुयुग्मस्य जंघाभ्या मापाद्याद्विपहस्तता ॥ ७ ॥
सताळभागमानं च दैर्घ्यं मे चारणं स्मृतम् ।
पार्ष्णीद्विगोळकतलेतन्मध्ये सांगुळे कळे ॥ ८ ॥
त्रिकळं चाग्रत श्चैव बाहुल्येन कळासमम् ।
पद मंगुष्ठनिकरा त्रियवोनं प्रकीर्तितम् ॥ ९ ॥
बाहुळंच कळामानं गुल्फदेशाच्च सांगुलम् ।
कनीयोंगुळिमूळाच्च गुल्फान्तं पिण्डिकांगुळम् ॥ १५० ॥
जंघावसानदेशाच्च वेष्टनं सप्तलोचनम् ।
कळाहीनं तदैवाग्रात परिणाहो विधीयते ॥ १ ॥
चरणं विधिनानेन कूर्मपृष्ठं समाप्य च ।
त्र्यंगुळेन च तद्दैर्घ्यां दंगुष्ठस्य च दीर्घता ॥ २ ॥

पंचांगुळःपरिज्ञेयः परिधिस्तस्यळांगळिन् ।
यवद्वयाधिकाकार्या तद्दैर्घ्यांत्तुप्रदेशिनी ॥ ३ ॥
अंगुष्ठायामतुल्याथ कार्यावैवादमध्यगा ।
मध्यांगुलेद्विरष्टांश हीनातदनुयास्थिता ॥ ४ ॥
तद्वत्तदनुगायाच त्रिपर्वास्तास्तु पूर्ववत् ।
संयुक्तानखजालेन कूर्मपृष्ठोपमेनच ॥ ५ ॥
द्विकळन्तुकळा [ यवा ] क्षेन पादतर्जनिवेष्टनम् ।
चतुश्चतुर्यवोनंच तच्छेषाणां प्रकीर्तितम् ॥ ६ ॥
त्र्यंशेनवेष्टनाद्विद्धि सर्वासांचैवविस्तृतिम् ।
सर्वेषमांसळास्सौम्या स्समास्स्वयवाश्शुभाः ॥ ७ ॥
दशनावळिवाह्यस्थे ओष्ठेसप्तयवोन्नते ।
यवद्वयोन्नतंमानं मध्यद्दन्त चतुष्टये ॥ ८ ॥
तत्पक्षगानांसर्वेषां मानविद्धिचतुर्यवम् ।
त्रियवद्विजविस्तार मग्रान्मूलायवद्वयम् ॥ ९ ॥
तत्सार्धमध्यदेशाच्च सर्वेदन्तानिरन्तराः ।
लोमप्रदक्षिणावर्तं मयुग्जन्मोत्थितं शुभम् ॥ १६० ॥
सुनिश्चितंहितचैत न्मानमव्यभिचारियत् ।
मनोहारित्वमेकत्र रूपलावण्यभूषितम् ॥ १ ॥
सर्वदाचानयोर्विद्धि अन्योन्यत्वेनसंस्थितिम् ।
सचौन्दर्यन्तुमानस्य क्वाचिदाक्रम्यवर्तते ॥ २ ॥
लावण्यरूपक्वचित्पात्रं समाच्छाद्यावतिष्ठते ।
यथातिरूपवान्लोके दरिद्रोप्येतिमान्यताम् ॥ ३ ॥
विरूपोप्यतिवित्ताढ्यो नाद्रूपोनैवनिर्धनः ।
एवंद्वयोर्ज्ञिनविग्र मनादेयत्वमेतिच ॥ ४ ॥
आदेयमेकयुक्तंच नित्यंयस्मान्महामते ।
सम्यङ्मानेचसौन्दर्ये भक्तानुग्रहकाम्यया ॥ ५ ॥

मन्त्रसन्निधिशक्तिर्वै सफलाद्यवतिष्ठते ।
साम्यक्रमतिपन्नस्य बिम्बेदृग्गोचरस्थिते ॥ ६ ॥
आमूर्ताह्लादयत्याशु ज्ञात्वैवं यत्नमाचरेत् ।
मानोन्मानप्रमाणाना मथसौन्दर्यसिद्धये ॥ ७ ॥
ऋजोस्सुसमपादस्य ह्यंगुलैचरणान्तरम् ।
तद्वैषिपमपादस्य अग्रात्तालसमंस्मृतम् ॥ ८ ॥
तत्पार्ष्णिद्वयमद्ध्यात्तु परिहेयंद्विगोल्कम् ।
स्थित्यर्थंत्रक्षनाद्याये तथामार्गद्वयस्यच ॥ ९ ॥
सूत्रेणसुसमेकुर्या द्देहोर्येदक्षिणोत्तरे ।
समपादस्यबिम्बस्य ललाटान्मेढ्रमस्तकम् ॥ १७० ॥
प्रसार्यसूत्रमाच्छाद्य तेननाभिहृदन्तरम् ।
घ्राणाग्रमळकानांच सन्धिर्यस्तिलकोर्ध्वगः ॥ १ ॥
एवंविषमपादस्य दक्षांगुष्ठाग्रगंनयेत् ।
गात्रसाम्यंसमापार्य क्षेत्रात्क्षेत्रगतेनच ॥ २ ॥
सूत्रेणसर्वबिम्बानां वैषम्यविनिवृत्तये ।
चतुस्त्रिद्व्यश्रिपरितः परिशुद्धायतशुभा ॥ ३ ॥
अशुभापरिशुद्धात्तु बिम्बोत्पावयवीस्थितिः ।
ललाटमश्ववक्त्रस्य विस्ताराद्द्वादशांगुलम् ॥ ४ ॥
अष्टलोचनमायामा दग्रतश्चतुरंगुलम् ।
कलार्द्धसुपिरेघ्राणे रन्ध्रेभागान्तरीकृते ॥ ५ ॥
अष्टांगुलेतु हनुके सृक्विण्यौ द्वेच तत्समे ।
मध्यत श्श्रोत्रशुक्ती द्वे द्व्यंगुले द्विकलोन्नते ॥ ६ ॥
द्व्यंगुलं घ्राणवंशन्तु तदूर्ध्वं द्विकलं स्मृतम् ।
विद्धि वक्त्रविकासं च द्वियवं चामतः क्रमात् ॥ ७ ॥
तमैवहि यवांशेन हन्वन्तं तनुतां नयेत् ।
घ्राणवंशस्य पक्षौ द्वौ मध्यनिम्नौ च संहतौ ॥ ८ ॥

यवद्वयेन सार्धेन दृग्घ्राणाभ्यां तु चान्तरे ।
अधोदृक्‌तु दृग्द्रोणे यवमानेन संचितम् ॥ ९ ॥
ललाटे साळकं प्रावत् दृङ्मध्यं सांगुला कला।
नृसिंहस्य मुखे विद्धि परितश्चाष्टलोचनम् ॥ १८० ॥
ततोष्ठकण्ठदेशाच्च कुर्यात्कर्णद्वयोज्झितम् ।
तत्कर्णद्वयमानेन ललाटान्तं नयेत्पुनः ॥ १ ॥
प्रमाणात्मा प्रमाणीताच्च संरम्भाघ्रातलक्षणम् ।
प्रफुल्लविकसच्छिद्रं घ्राणं वंशान्वितं भवेत् ॥ २ ॥
तच्छिद्रपूर्वमानाच्चा प्यस्य वै त्रियवाधिकम् ।
सगोळमुत्तरांगेषु, सकलांशं च लोचनम् ॥ ३ ॥
अधरोष्ठः परिज्ञेयः स चतुर्यव मंगुलम् ।
सार्धचतुष्कलं वक्रं शेषायामो हनो स्स्मृतः ॥ ४ ॥
तद्विकासः परिज्ञेयो नेत्रमानं यवाधिकम् ।
अग्रतो ग्रास मायाति सृक्विणयन्तं हि चांगुलम् ॥ ५ ॥
सर्ववृत्तं तदर्धेन नेत्रयुग्मं सविस्मयम् ।
पूर्ववद्विस्तृतं श्रोत्रं कलार्धेन तदुन्नतेः ॥ ६ ॥
तुल्या चेन्दुकला युग्मयोगस्य भ्रूत्रिगोळका ।
तन्मध्यन्तु कलामानं शंखावर्तोपम म्मदृत् ॥ ७ ॥
भागमान सटावृत्तं कार्यं तच्छिरसि स्फुटम् ।
दैर्घ्येण सार्धतालं च क्ष्माधरस्याननं स्मृतम् ॥ ८ ॥
विस्तारेण ललाटाच्च तन्मानं द्व्यंगुलोज्झितम् ।
सौम्यरूपस्य च विभोः प्रोन्नतस्य कलोज्झितम् ॥ ९ ॥
तच्चतुर्थांशमानेन पोत्रदेशस्य विस्तृतिः ।
तस्योपरिष्टा द्बाहुल्यं तत्समं चांगुलन्त्वधः ॥ १९० ॥
दन्तद्वयस्य वै मानं सार्धसप्तांगुळं स्मृतम् ।
शेषमाननरन्ध्रं तु सृक्विणोभ्यां यदन्तरम् ॥ १ ॥

तद्विकाखश्च सार्धेन कलार्धेनाग्रदेशतः ।
स एवांगुळमानेन विज्ञेय स्सृक्विणीद्वयात ॥ २ ॥
घ्राणरन्ध्रश्च वक्रोक्ते दंष्ट्रे द्वयर्ध [ त्वर्ध ] कलोन्नते ।
नासावंशं यथापूर्व कदलीनाडिपृष्ठवत् ॥ ३ ॥
श्रोत्रे वाजिमुखोक्तेतु कोटे स्सप्तकलान्तरे ।
तत्तुल्ये लोचने किन्तु प्रान्ततीक्ष्णे यथोज्झिते ॥ ४ ॥
एतेषां विहिता ग्रीवा ह्यंगुळिद्वितयेन तु ।
प्रत्येकदेशा त्संयुक्ता सौम्यमूर्त्युदिता च या ॥ ५ ॥
विनोच्छ्रायेण नृहरे र्यस्य गात्रस्य या प्रमा ।
सा सा सवेष्टना द्वयासा त्कलार्धेनाधिका भवेत् ॥ ६ ॥
वक्षः कट्युदरांसस्फि क्कलामानाधिकानि च ।
तथैव नखपत्राणि देह श्चास्य समांसलः ॥ ६ ॥
सम्पूर्णो दक्षिणावर्तै लोमभि श्चातिकुंचितैः ।
त्रिचतुःपंचवक्रस्य विनैवोर्ध्वमुखेन तु ॥ ८ ॥
दक्षिणोत्तरवक्राभ्यां ह्रासं कुर्या द्विगोळकम् ।
विकास स्सिद्धवक्रोक्त उदग्वक्रस्य तत्र च ॥ ९ ॥
समो दक्षन्निवेश स्तु चतुर्णां मोक्षसिद्धये ।
आरोग्यभोगकैवल्यप्राप्तये ध्यांगुळेनतु ॥ २०० ॥
कुर्या त्सव्यापसव्याभ्या मधो दक्षन्निवेशनम् ।
सह पूर्वानने चैव सम्यक्प्रत्यङ् मुखस्य च ॥ १ ॥
निष्ठा [ ष्का ] सा यामविस्तारप्राणदृक् भूश्रुतिष्वथ ।
ईषत्तिर्यक्क्षितिन्यस्त दृङ्मुखं दक्षिणं शुभम् ॥ २ ॥
तद्वच्च पौण्ड्रवक्र मुत्तरं सर्वसिद्धिकृत् ।
स्वकार्यसूचना न्यूनं तन्मन्त्रस्य च सन्निधिः ॥ ३ ॥
अतोन्यथा समाश्रित्य शान्ति मास्ते च मन्त्रराट् ।
नित्यं तत्सन्निधानाच्च भूतवेताळराक्षसाः ॥ ४ ॥

आदर्शना त्पलायन्ते आविशन्ति च दर्शनात् ।
आदाय शिरसा मन्त्रिसमाज्ञां सम्प्रयान्ति ते ॥ ५ ॥
अत स्समाचरे यत्ना येन स्या द्विम्बसन्निधिः ।
नाहि तत्सन्निधाना द्वै कश्चि दारभते शुभम् ॥ ६ ॥
वराहदंष्ट्रं धिह्माक्षं तथा चिपिटनासिकम् ।
विधेयं पंचमं वक्र पंचवक्रस्य वै विभोः ॥ ७ ॥
अस्याधरोत्तराभ्यां त्वप्योष्ठाभ्यां समता भवेत् ।
विभिन्नतांगुलार्धेन ताभ्यां तन्मध्यगा स्फुटा ॥ ८ ॥
कार्या दशनपाळी वै मूलमध्याग्रत स्समा ।
कलार्धेनोत्त्वणं वृत्तं तद्गण्डाद्वितयं ततः ॥ ९ ॥
द्विकलं चाग्रतःश्मश्रु कलाचार्धकलाक्रमात् ।
सम्बन्धवेणिः पूर्वोक्त मानेन शुभकृद्भवेत् ॥ २१० ॥
सिंहसूकरवाज्या [ न्मु ] ख्यवक्राणां सौम्यतां नयेत् ।
प्रमाणं द्दगता ह्रस्वा द्व्यवहारमयात्तु वै ॥ १ ॥
विकास श्चाश्ववक्रोक्त स्सौम्यरूपस्य भूभृतः ।
तदाद्योक्तस्तु नृहरेः प्रागुक्तो य स्सचोदितः ॥ २ ॥
तथा यक्षांगभावित्वे विभो श्शाक ीश्वरस्य च ।
हारनूपुरवस्त्रस्फटिकांगदभूषिता ॥ ३ ॥
माल्योपवीतकेयूर मकुटाद्युपशोभिता ।
प्रतिमामन्त्रमूर्तीनां कृता भवति सिद्धिदा ॥ ४ ॥
यत्तुरा पंचधा प्रोक्तं वादनं प्राणदैवतम् ।
तस्य विम्बसमुत्थेन तालेन मुखमण्डलम् ॥ ५ ॥
द्व्यंगुलन्तु ललाटोक्तं जटाबन्धो द्विलोचनः ।
द्व्यंगुलेनोन्नतः कण्ठः उरः पंच करं स्मृतम् ॥ ६ ॥
अष्टांगुलं तदुदरं कटिः पंचांगुलोन्नता ।
नवांगुलायदा ऊरू जानुनी द्व्यंगुले स्मृते ॥ ७ ॥

अष्टांगुलोच्छ्रितेजंघे द्व्यंगुलेपादपिण्डके ।
दाममेकंकलाहीन न्तद्वीपापार्श्ववेष्टनम् ॥ ८ ॥
बिम्बतुल्यापरिलेखा सर्वदास्यांगविस्तृतिः ।
तद्विभागाधिकंविद्धि वेष्टनंद्युदरस्यच ॥ ९ ॥
परिधिःकटिदेशस्य चतुर्भिर्वाधिकस्तुवै ।
बिम्बोस्तम्भदशंविद्धि तदूर्वोर्मूलवेष्टनम् ॥ २२० ॥
तदेवजंघामध्यस्य जंघान्तस्यतदेवहि ।
पादंपंचकलायामं चतुरंगुलविस्तृतम् ॥ १ ॥
त्र्यंगुलंपाणिदेशाच्च अंगुष्ठोर्धकलासमः ।
त्रिशेषाभ्यंप्रिदैर्घ्यां [ देशा ] च्चपदो [ पे ] नांगुलपःक्रमात् ॥ २॥
नाभिरन्ध्रंसुविस्तीर्णं द्व्यर्धलोचनविस्तृतम् ।
मध्यमांगुलिपर्यन्तं मणिबन्धान्नवांगुलम् ॥ ३ ॥
त्रिकलःपाणिविस्तार स्तत्रलानिशितोन्नताः ।
तद्बाहुमस्तकंविद्धि तच्छ्रायेणद्विलोचनम् ॥ ४ ॥
भुजोपभुजयुग्मंच तद्वितालसमंस्मृतम् ।
कलार्धेनाधिकंबिम्बं बाहोस्तद्बाहुवेष्टनम् ॥ ५ ॥
बिम्बोस्तांसद्वितीयेव [ ? ] स्तनभूर्लोचनोल्बणा ।
वृत्तवैपुल्यमानेन लोचनेपद्मपत्रवत् ॥ ६ ॥
भ्रूयुगंनरसिंहोत्थं घ्राणाग्रंशुकचंचुवत् ।
कलार्द्धमानंदीर्घंच तद्वंशंगजपृष्ठवत् ॥ ७ ॥
स्वायामदीर्घतत्पक्षा युगलंकुक्षिदेशगम् ।
तदेवदैर्घ्यादर्धेन विस्तृतंहंसपक्षवत् ॥ ८ ॥
स्वपक्षमानाद्द्विगुणं तत्पुच्छंशतशाखकम् ।
सपक्षमिममायामं सार्धत्र्यवयवान्वितम् ॥ ९ ॥
सर्वेषांविद्धिसामान्यं विशेषाख्यमथोच्यते ।
ऊरुद्वयान्नवेभास मंगुलानांत्रयंतथा ॥ २३० ॥

जंघाकाण्डोच्छ्रितेकुर्यात् जंघाभ्यांचात्रवेष्टनम् ।
बिंबाख्यंमणिबन्धस्य सममूर्ध्वांमहामते ॥ १ ॥
ज्वालदेशात्तदर्धेन सहचार्धांगुलेनतु ।
पादेज्वालपरिज्ञेयं विस्तारेणषडंगुलम् ॥ २ ॥
शेषंसार्योदितंसर्वं सर्वेषांविद्धिसर्वदा ।
किन्तुपादोज्झितौपक्षौ दैर्घ्यात्तद्दळविस्तृतौ ॥ ३ ॥
एषास्वोड्डीयमानानां स्वामामापक्षविस्तृतिः ।
पंचानांचपरिज्ञेया स्थितानामर्धलक्षणा ॥ ४ ॥
एतदादायमानन्तु पुच्छभूपक्षवर्जितम् ।
विद्धिवामनरूपस्य लक्षणंकिन्तुलांगलिन् ॥ ५ ॥
ललाटनासावक्त्रेभ्य स्समादायांगुलत्रयम् ।
मस्तकस्योपरिष्टात्तु जटाबन्धंप्रकल्पयेत् ॥ ६ ॥
जटावसानमायामं यथास्यात्पंचतालकम् ।
इत्युक्तंलेशतोबिम्ब लक्ष्मपीठमथोच्यते ॥ ७ ॥
बिम्बानामुपविष्टानां चतुरश्रन्तुतद्भवेत् ।
चतुरश्रायतश्चैव मोत्थितानांसदैवहि ॥ ८ ॥
वृत्तवृत्तायतत्वेन ह्यनयोरूपमन्यथा ।
यांगुलैः परमाणुर्थे राराधक्रमयैस्तुवा ॥ ९ ॥
यत्तेश्चांतुसमायामं द्वाराद्वामान्दिरोत्थितात् ।
तन्मानेनतुपीठस्य दैर्घ्यमर्धेनविस्तृतिः ॥ २४० ॥
द्वारोर्ध्वांच्च त्रिरन्तानि एकपूर्वाणि वै पुरा ।
सन्त्यज्य द्वादशांशा द्वै अधः पीठोन्नतिं त्रिभिः ॥ १ ॥
शेषेणाचांशसंघेन प्रतिमा चोत्थिता भवेत् ।
अथवा वाहनारूढा न्यूना वा मध्यमोत्तमा ॥ २ ॥
चतुर्भि द्वादशांशै स्तदुपविष्टस्य चोन्नतिः ।
विहिता चास्य सर्वत्र प्रतिमार्धेन विस्तृतिः ॥ ३ ॥

तत्त्र्यंशपरिलुप्ताच चतुर्थांशोज्झिताथवा ।
परिवारवशेनैव चातुरात्म्यस्यवैपुनः ॥ ४ ॥
अलुप्तांशंचविहितं पीठायामंचसर्वदिक् ।
चातुर्दिक्द्दग्गतस्यैव मेकदिग्द्दग्गतस्यच ॥ ५ ॥
तदेवदैर्घ्यद्विगुणं लांछनैरावृतस्यच ।
सार्द्धंचानावृतस्यैव तद्वाहुल्यंपुरोदितम् ॥ ६ ॥
एकैकंलक्ष्मभेदेन तत्संख्यंविद्धिवैपुनः ।
अनन्तासनमाद्यंच द्वतीयंपक्षमन्दिरम् ॥ ७ ॥
कमलांकं तृतीयन्तु चतुर्थं चक्रभूषणम् ।
एवंहिसर्वसामान्यं पीठानांहिद्विरष्टकम् ॥ ८ ॥
भेदभिन्नं समासेन पुनरेवनिबोधतु ।
दिक्षुलक्ष्माणिपीठानां विद्धिकण्ठगतानिच ॥ ९ ॥
अन्योन्यसन्निवेशाद्य तेषां वह्वात्मनापुनः ।
चक्राबुजाभ्यां तत्स्थाभ्यां लुप्ताभ्या मपितत्क्षितेः ॥ २५० ॥
ताभ्यामन्योन्ययोगाद्य दिक्ष्वनन्त खगाश्रयात् ।
द्विद्व्यात्मनाद्व्यात्मनावा बहुत्वमवधारय ॥ १ ॥
पद्मेनोर्ध्वगतेनैव द्वयं चक्रेण तद्वहिः ।
एवं ह्यधोगतेनैव परिज्ञेयं द्वयं द्वयम् ॥ २ ॥
उपरिष्टात्तु पद्माभ्यां मधश्चक्रं द्वयं द्वयम् ।
द्वितयत्पत्ययाच्चान्य त्परिज्ञेयम्महामते ॥ ३ ॥
अन्तर्बहिस्स्थितिवशा चक्र पद्म द्वयस्यच ।
व्यत्ययाद् द्वनयो विद्धि ऊर्ध्वभागाच्चतुष्टयम् ॥ ४ ॥
अधोभागा द्वेवमेव चतुष्कमपरन्तुवै ।
पीठाना मष्टक मिद मधस्ता दूर्ध्वत स्तु वा ॥ ५ ॥
युक्तमेकेनवैकुर्या च्चक्रेण कमलेन वा ।
चक्राकारास्तु विहिता ह्येकभ्रम समाश्रिता. ॥ ६ ॥

बद्दवोहि दळास्तद्व दीर्घद्वैकर्णिकान्विताः ।
इतिलांछन संचारो बहुधाते मयोदितः ॥ ७ ॥
यास्मिन् प्रकृति भूतेतु पीठे तदधुना शृणु ।
कृत्वा द्विर्दशधा पीठं पुरा यामा त्समैः पदैः ॥ ८ ॥
एकेन चरणं जंघा कळशौ च त्रिभि स्त्रिभिः ।
कण्ठ [ र्ण ] वीधिमथैकेन षड्भिः कण्ठं [ र्ण ] तदूर्ध्वतः ॥ ९ ॥
भागेन कण्ठ [र्ण ] सूत्रन्तु शुक्तिकांशत्रयेण तु ।
उष्णीषं च तदूर्ध्वेतु कुर्या दंशद्वयेन वै ॥ २६० ॥
निर्गमःस्वदळेनैव विहितश्च रणस्य च ।
चतुर्दिक्षु महाबुद्धे क्षेत्रतोभ्यधिकःस्मृतः ॥ १ ॥
सर्ववृत्तं घट कुर्यात् पल्लवै र्वारकै र्युतम् ।
परितोंशद्वयेनैव कर्ण [ ण्ठ ] पीठं प्रवेशयेत् ॥ २ ॥
अन्तःप्रवेश मेकेन विध्यंशेन गळस्य च ।
कुर्या द्गळप्रवेशस्य , समां सूत्रस्य निस्सृतिम् ॥ ३ ॥
शुक्ते रधःक [र्ण ] ण्ठ सूत्रभागा त्पादेन निर्गतम् ।
वदनान्तं समासेन शुक्ते स्संकोच माचरेत् ॥ ४ ॥
उष्णीषघटजंघाना मश्रिसाम्यं यथास्थितम् ।
घटवद्भूषये च्छुक्तिमरकै र्वाब्जपल्लवैः ॥ ५ ॥
तत्रोपरिष्टा त्परिधिं चतुरंशकसम्मितम् ।
सन्त्यज्य निरखनेत् द्रोणी मंशनिम्नां समन्ततः ॥ ६ ॥
विस्तृते मध्यभागेय स्वत्र्यंशेनतु निर्गमम् ।
तन्मानं चतुरश्रन्तु पीठस्यो द्विनिर्गतम् ॥ ७ ॥
तच्चायत स्त्रिधा कृत्वा पक्षभागौ क्षय द्ययेत् ।
अनुपादेन चामूलात् सम्यङ्ळांगलवस्त्रवत् ॥ ८ ॥
अग्रतो मूलदेशाच्च कृत्वाद्गौ वै त्रिधा त्रिधा ।
भूय स्तत्रिपने न्मध्या जलं याति यथाद्रुतम् ॥ ९ ॥

सूकराननतुल्यन्तु भवायेव म्महामते ।
कुर्या द्वे शंखसदृश म्मकरास्योपमन्तु वा ॥ २७० ॥
जलनिर्गम मेतद्वै पीठे पूदितलक्षणम् ।
न कुर्या त्कर्मबिम्बाना मशमादिमितात्मनाम् ॥ १ ॥
चित्रमृत्काष्ठजानां तु चपलानां विशेषतः ।
समणालं भवे त्पीठ मासनं च प्रणालकम् ॥ २ ॥
भूरि नीरादिना स्नानं यत्र यच्छति साधकः ।
प्रत्यहं वह्निना तत्र प्रत्यवायो भवे त्स्फुटम् ॥ ३ ॥
एवमेव बृहद्बिम्बभूषितानां विधीयते ।
धातुशैलोत्थितानां च निमित्तस्नपनार्थतः ॥ ४ ॥
भद्रासनगते कर्मबिम्बे तस्य समाचरेत ।
सततं च यथालाभं दधिक्षीरघृतादिना ॥ ५ ॥
तोयेन तत्रये यत्नात् भूभागं वा प्रतिग्रहम् ।
यथा नाक्रम्यते पादै जन्तुभि स्तन्महर्धिदम् ॥ ६ ॥
अतः प्रणालं विहितं निषिद्ध मत एव हि ।
तत्संस्थापनकालेतु देवानां दिग्विधेर्हि तम् ॥ ७ ॥
प्राक्प्रत्यगाननानां च तदुदक् दिग्गतं शुभम् ।
उदग्दक्षिणवक्त्राणां प्राग्भागे विहितं सदा ॥ ८ ॥
तत्पुन भद्रपीठीय देवा द्वामेर्थसिद्धिकृत ।
सदैवाराधकानान्तु विलोमा द्विपरीतदम् ॥ ९ ॥
पीठवच्च परिज्ञेयं प्रासादस्य स उच्यते ।
शुभे दिनेनुकूले च नक्षत्रे पूजिते ग्रहे ॥ २८० ॥
लग्ने स्थिरे स्थिरांशे च दृक्शुद्धे चोत्तरायणे ।
दिव्या सुपातसंशुद्धे सितपक्षे मलेम्बरे ॥ १ ॥
आजलान्तं कृते खाते पूर्ववत्सम्प्रपूरिते ।
विमुक्तदोषे भूभागे सर्वलक्षणलक्षिते ॥ २ ॥

पूरणा दंशशेषेतु सुपलिप्ते धरातले ।
चतुष्षष्टिपदे भूते प्राग्वास्त्रेण सर्वदिक् ॥ ३ ॥
स्नात श्शुक्लाम्बर स्स्रग्वी कृतन्यास स्सुशान्तधीः ।
सर्वसाधनसंयुक्तं श्चाद्यैपात्रसमन्वितः ॥ ४ ॥
मङ्गलपकुम्भ मादाय ध्यायमानोच्युतं हृदि ।
सहचैकायने विप्रै स्सदागमपरायणैः ॥ ५ ॥
तथा ऋङ्मयपूर्वैस्तु आमूलाद्वेदगन्मयैः ।
विशेत्प्रासादभूभागं मध्ये कुम्भ निधाय तम् ॥ ६ ॥
कुर्या न्निरीक्षणं भूमि स्ताडनं प्रोक्षणं ततः ।
सेचनं पंचगव्येन सह चास्त्रोदकेनतु ॥ ७ ॥
ॐकाराद्य पवित्रान्तं मन्त्राणां प्राक्चतुष्टयम् ।
पाठयेच्च संपुण्याहं ब्राह्मणान् कृतमण्डनान् ॥ ८ ॥
बहृचाचौत्रं ( नं शाकुनं ) ना सूक्तं ततो भद्रं यजुर्मयान् ।
इडामयेति सामज्ञो श्शान्तायौ रित्यथर्वणान् ॥ ९ ॥
ईशकोणा त्समारभ्य मार्गादौ प्रतिपङ्क्तिषु ।
द्वादशाक्षरमन्त्रेण स्वनाम्नातु पदे पदे ॥ २१० ॥
नतिप्रणवगर्भेण दैवतं देहलक्षणम् ।
यष्टव्यो वास्तुपुरुषो दधिस्रक्चन्दनादिना ॥ १ ॥
सात्विकेनोपहारेण अग्नौ सन्तर्पयेत्ततः ।
कुर्या त्कुम्भप्रतिष्ठानं यथा तदवधारय ॥ २ ॥
पूर्ववत्तोरणाद्यैस्तु भूभाग मुपशोभयेद् ।
कर्णिका ( निर्णिक्ता ) छयवक्त्रस्य भ्रमत स्तत्क्षिते र्बहिः ॥ ३॥
सर्वोपकरणोपेतं कुर्या न्मण्डप ( म ) मुत्तमम् ।
कुण्डाष्टकान्तरस्थं च स्थलं तत्राष्टहस्तकम् ॥ ४ ॥
सस्थण्डिका द्विहस्तास्तु कुण्डाः पूर्वोक्तलक्षणाः ।
त्रिहस्ता [ स्त ] पाचि[ रि ]ता योधी स्याद्विवं द्विनय श्शमः ॥५॥

पूर्ववत्प्रतिकुण्डेतु विनिवेश्यं च साधनम्।
आमन श्चोत्तरे कुर्यात् कुण्डं चाथ समस्थले ॥ ६ ॥
दक्षिणे पूर्ववद्देव मवतार्य मजे त्क्रमात।
स्थलायां स्थण्डिलस्योर्ध्वे उन्नतायां च पूर्ववत् ॥ ७ ॥
तर्पयित्वा यथाकाम मुद्धृत्याग्निगणं ततः।
दिक्कुण्डेषु विनिक्षिप्य संस्कृतेषु च पूर्ववत् ॥ ८ ॥
तथैवच विदिक्स्थेषु उद्धृत्याभ्यर्च्य वै क्रमात।
तत्प्रभवयोगेन चतुर्दिक्षुनिवेशयेत ॥ ९ ॥
चतुरोवासुदेवादीन् नाम्नाएकायनान् द्विजान्।
स्वाभिःस्वाभिरसंख्यात्तु तैः कार्यमभिधायच ॥ १०० ॥
कर्मावसानंहवनं साज्यैस्तुतिलतण्डुलैः।
एवमप्ययोगेन वाय्वादीशानगोचरम् ॥ १ ॥
ऋग्वेदाद्यांस्तु चतुर स्संस्कृत्यादौ तथान्यसेत।
तैरप्यच्युत लिंगैस्तु स्वशाखोक्तै श्चपावनैः ॥ २ ॥
हवनंविधिवत्कार्यं भक्तियुक्तेनचेतसा।
अथेशकोणमासाद्य ब्राह्मणैरपरैस्सह ॥ ३ ॥
प्राक्निर्दिष्टन्यसेत्तत्र स्नानोपकरणन्तुयत्।
दशार्द्धगव्यपर्यन्तु कलशेषु पृथ क्पृथक् ॥ ४ ॥
तानचर्घाद्योदिनापश्चात् द्विषट्केनाभिमन्त्र्यच।
समानीयशिलोपेतान् कलशान् पूर्वसम्भृतान् ॥ ५ ॥
उत्कृष्टधातुसम्भूतान् नवशैलमयांस्तुसा।
समान् सपक्वान् सुघनान् न्मृण्मयांस्तदभावतः ॥ ६ ॥
द्वादशांगुलविस्तीर्णा स्तन्मानेनतुचोन्नतान्।
द्विगुणान् सतिसामर्थ्ये नृपाणां हेमजान् हितान् ॥ ७ ॥
तत्तुल्यं चतुरश्रन्तु द्वादशांगुलविस्तृतम्।
तत्त्वयंशतुल्यंबाहुल्यात शिलावृन्दं समाहरेत ॥ ८ ॥

संस्थाप्यविधिवत्कुम्भान् पूर्वोक्तेनक्रमेणतु ।
कम्बुतुल्यमथैकंवा सकण्ठं त्र्यंगुलोन्नतम् ॥ ९ ॥
तद्गुणैरपिविस्तीर्णं तत्पातोष्टांगुलस्स्मृतः ।
परितःकर्णवर्जन्तु शंखोवासुषितोमहान् ॥ ३१० ॥
विहितोहतनासन्तु अन्तश्शुद्धस्तुसाक्षतः ।
एवंहिसान्तराद्वाद्या स्समालभ्याधिवास्यच ॥ १ ॥
फलैर्हेमादिकैरत्नै स्सर्वौषधिमयैस्ततः ।
गन्धैर्बीजैस्तथाधान्यै विद्रुमाद्यैस्तुमौक्तिकैः ॥ २ ॥
नेत्रवस्त्रैरलंकारै र्भूषयेत स्रग्वरैश्शुभैः ।
द्वादशाक्षरमन्त्रेण एकैकस्यसमाचरेत् ॥ ३ ॥
मूर्तिसंसिद्धयेन्यासं प्रणवैस्तच्चिदात्मना ।
ततश्चार्घ्यादिकैर्भोगै र्बल्यन्तैर्विविधैर्यजेत् ॥ ४ ॥
शिलास्वेवं कृतेःपश्चा न्निनयेत्कुण्डसन्निधिम् ।
सशिलकुम्भवृन्दन्तु आधारेषूपरिन्यसेत् ॥ ५ ॥
तदाधारशिलांपश्चात तत्रवामण्टपाद्बहिः ।
एवमेवचसंस्कृत्य भावयेत्प्रणवेनतु ॥ ६ ॥
ज्वलन्तींगोसहस्रेण खचितांसूर्यबिम्बवत ।
तत श्चाराध्यमन्त्रन्तु सन्तर्प्य शतसंख्यया ॥ ७ ॥
मध्ये तत्कलशं न्यस्य सांगं सपरिवारकम् ।
निश्शेषशक्तिगर्भन्तु व्यापकं ब्रह्मतत्ववित ॥ ८ ॥
अत ऊर्ध्वं तिर्यगाभि र्वागाद्याभिश्च शक्तिभिः ।
व्रतमूर्तिसमेताभि रभिन्नाभिस्तु तत्वतः ॥ ९ ॥
पाठये द्ब्राह्मणां स्तत्र आत्मभ्यूहन्तु मन्त्रराट् ।
तथैवात्मानुवादं च प्रणवाद्यन्तगन्तु वै ॥ ३२० ॥
तमर्चयित्वा विधिव त्तर्पयित्वा त्वनन्तरम् ।
दिक्स्थितानां च कुम्भानां वासुदेवादिकान्नयसेत् ॥ १ ॥

पूर्ववच्चानिरुद्धाद्यान् विदिक्संस्थापितेषु च ।
पाठयेच्चातुरात्मीयं संज्ञामन्त्रचतुष्टयम् ॥ २ ॥
प्रभवाप्यययोगेन तत स्सूक्तन्तु पौरुषम् ।
ऋग्वेदान् पाठयेद्भक्त्या युंजते त्वपरान्यजुः ॥ ३ ॥
रथन्तराख्यं यत्साम सामज्ञान् भगवन्मयान् ।
सहस्रशिरसं चेति मन्त्रां श्चाथर्वणां स्ततः ॥ ४ ॥
एकस्मि न्वा महाबुद्धे सर्वोक्तं कलशे स्थितम् ।
तथैव हवनं कुण्डे मध्यमे विहितं स्वयम् ॥ ५ ॥
किन्तु क्रमेण वै मन्त्रान् पाठयेच्च यथास्थितान् ।
एवं सम्पातहोमन्तु कृत्वा पूर्णान्तिकं ततः ॥ ६ ॥
महाशक्तिसमूहस्तु पर स्सामर्थ्यलक्षणः ।
अभेदेन च मन्त्रादिमूर्तीनां य स्स्थित स्स्फुटम् ॥ ७ ॥
स सन्धेय शिलानां च स्वनाम्ना प्रणवेनतु ।
ज्ञानभासा निवसति तथानन्तबला प्रभा ॥ ८ ॥
सर्वगा ब्रह्मवदना द्योतकी सत्यविक्रमा ।
सम्पूर्णा चेति कथिता श्शक्तयो विश्वधारिकाः ॥ ९ ॥
या शिला कलशाधारसंज्ञातां विद्धि सर्वगाम् ।
सामर्थ्यशक्तिसामान्यां निष्कलां पारमेश्वरीम् ॥ ३३० ॥
सन्तर्प्य मूलमन्त्राच्च शिखामन्त्रेण लांगलिन् ।
अजस्य नाभावप्येक मन्त्रेणैकायनै स्ततः ॥ १ ॥
तादर्थ्येनतु होतव्यं मृद्मयैस्तु तथैव हि ।
होतव्य मस्य वाग्मीयं गायत्रीभि रतो परैः ॥ २ ॥
होतव्यं ब्राह्मणै स्सम्य क्तद्वचासि स्वपलक्षकैः ।
दत्वा पूर्णा स्वयं कृत्वा स्थलस्थस्यार्चनं पुनः ॥ ३ ॥
बलिदानञ्च भूतानां समाचम्य ततो व्रजेत् ।
प्रासादब्रह्मभूभागं न्यसे तत्र महाशिलाम् ॥ ४ ॥

संस्मरं श्वक्रमन्त्रन्तु सानन्तं प्रणवेन वै ।
बीजभूतं तदन्तस्स्थ मष्वपट्कं स्मरन्यजेत् ॥ ५ ॥
निश्शेषमन्त्रवृन्देन होमस्याद्ये रनन्तरम् ।
द्वारदिग्वीक्षमाणन्तु मध्ये मन्त्रघटं न्यसेत् ॥ ६ ॥
स्वदिक्ष्वन्यान्यथावस्थान् स्वै स्वै मंन्त्रै र्निवेशयेत् ।
तत स्स्वशक्तिपाषाणै रेकैकं स्थगयेत घटम् ॥ ७ ॥
पूरये दस्त्रमन्त्रेण घटाना मन्तरं तत. ।
मृदु मृद्वालुकाभिस्तु सुधयाचळखिद्रये ॥ ८ ॥
संवेष्टच नेत्रवस्त्रैस्तु ऋग्वेदान् पाठये ततः ।
आत्वाहार्षेति सूक्तन्तु प्रतिष्ठा सामसामगान् ॥ ९ ॥
द्वादशाक्षरसंयुक्तं बळमन्त्रं पुनः पुनः ।
वक्तव्यं ब्रह्मनिष्ठैस्तु प्रणवान्तं सुभावितैः ॥ ३४० ॥
तदेकतनुतां यातं संस्मरे त्प्रणवेनतु ।
मूर्त्या दिशन्ति निष्टं यन्नामरूपक्रियात्मकम् ॥ १ ॥
द्वादशाक्षरमन्त्रेण भूय स्सहृदयंगमैः ।
तदाराध्यं समूर्तिन्तु संयजे त्तेजसां निधिम् ॥ २ ॥
तत स्सर्वो भगवन् भोगैः पाठये त्स्वांचरात्रिकान् ।
अर्चामि तेति ऋग्वेदा नर्चा सामच तद्विदः ॥ ३ ॥
ततः परिगृहीतेतु क्षेत्रे देवगृहीप्सके ।
द्वादशांगुळमानन्तु दिग्विदिक्ष्वष्टकं न्यसेत् ॥ ४ ॥
स्थापितं पूजितं सम्य क्शिलाना शुभलक्षणम् ।
तदन्त स्सन्निरोद्धव्या बुद्धिधर्मगुणाः क्रमात् ॥ ५ ॥
धर्माद्या स्वाग्निकोणात्तु याव दीशपदं पुनः ।
प्रागादा वुत्तरान्तं च अधर्माद्यं चतुष्टयम् ॥ ६ ॥
शिलाना मन्तरे भूमौ षट्कं षट्कं क्रमेण तु ।
न्यस्तव्यं पूर्ववर्णाच्च वर्णानां सावसानकम् ॥ ७ ॥

शब्दब्रह्मानुविद्धां च कृत्वैवं बुद्धिवागुराम् ।
सूत्रभूतां न्यसेत् तस्य प्रासादतलसंस्थिताम् ॥ ८ ॥
न्यसेत् प्राङ्गणभित्त्यर्थं तथैव हि शिलाष्टकम् ।
तासु संरोधयेत् तस्य क्रमाद्युक्तां स्तु दिगीश्वरान् ॥ ९ ॥
चक्रं सदन्तभूमीनां भ्रमद्वह्निस्फुलिंगवत् ।
क्षणेन चिन्तयेद् व्याप्तं भूभागं चांगणीयकम् ॥ ३५० ॥
आभोगं तदूध शेषं तदूर्ध्वं गगनेश्वरम् ।
बहिः प्राकारभित्तीनां सार्धं सपरिवारकम् ॥ १ ॥
प्रागादा वीशकोणान्त मिन्द्राद्यं चाष्टकं न्यसेत् ।
तथाविधेषूपलेषु अन्तर्भूमिगतेषु च ॥ २ ॥
तत्स्वनाम्नार्चयित्वा तु ऋग्वेदान् पाठयेत् ततः ।
ऋचो न विद्वानिन्द्रिये ये देवास्तु यजुर्मयान् ॥ ३ ॥
देवव्रतं च सामज्ञान् प्रविश्याभ्यन्तरं ततः ।
स्थित्वाग्रतो मन्त्रमूर्तेः रक्ष्यस्यामि मनुस्मरेत् ॥ ४ ॥
बीजस्य श्वांकुरीभूता पुरस्ता द्व्यक्ति मेति सा ।
प्रासादपीठपर्यन्तं कुम्भाधारोपलात्तु वै ॥ ५ ॥
भुवनाध्वा यथावस्थो भावनीयः पुरोदितः ।
गर्भोच्छ्रायावधि यावत् पादाध्वानं विलोकयेत् ॥ ६ ॥
मन्त्राध्वा शुकनासान्त स्तत्त्वाध्वावेदिकावधिः ।
*कलाध्वाण्डगंजा [ तुगळा ] न्तश्च वर्णाध्वाच तदूर्ध्वतः ॥ ७ ॥*
समीकृत्य पुरा सर्वं प्रासादं प्रारभे ततः ।
बलादूनाधिकाश्चैव सांगुलै रचितैः करैः ॥ ८ ॥
द्विर्द्वादशकरं यावत् तालेनोनाधिकेन तु ।
शुभाय सिद्धये विद्धि गर्भं देवगृहस्य च ॥ ९ ॥
कृत्वा क्षेत्रांगुलानां च कराणां वा घनं पुरा ।
त्यक्ते तदष्टभि स्तस्य गच्छेषं तद्विचार्य च ॥ ३६० ॥

एकाद्यष्टमपर्यन्ता ध्वजधूमसृगेश्वराः ।
श्वाच गोखरमातंग वायसा स्तु तत इशुभाः ॥ १ ॥
एकत्रिपंचसप्ताख्या स्सर्वत्रैव विधीयते ।
गर्भषड्भाग मानेन तद्वादि भित्तिविस्तृतिः ॥ २ ॥
तन्मानं परित स्तयस्तवा भित्ति रन्या विधीयते ।
एवमत्रक्रमेणैव सहभित्तिगणेनतु ॥ ३ ॥
गर्भद्विगुणविस्तीर्णं क्षेत्रंदेवगृहस्यच ।
मन्दिरेत्वेकभित्तीये क्षेत्रमानंविधीयते ॥ ४ ॥
गर्भोऽस्ततत्रिभागेन युक्तंयुक्तेन वर्त्मना ।
रन्ध्रादिह्रासवृद्ध्यात्तु आयशुद्धिंविचारयेत् ॥ ५ ॥
एवनिर्जगतीकंच भागपीठंविवर्जितम् ।
प्रासादक्षेत्रमानच तद्युक्तमवधारय ॥ ६ ॥
षड्भागेनाधपादेन त्रिभागेनोभयात्मिका ।
विहिताजगतीभाग रतक्रियाविस्तृतिर्भवेत् ॥ ७ ॥
अधिकार्द्धचतुर्दिक्षु तत्पंचांशैस्तुवैत्रिभिः ।
तृतीयांशेनवैमध्ये निर्गमस्तुविधीयते ॥ ८ ॥
कोणात्कोणात्तुवैशेषं भागंभागंप्रवेशयेत ।
उच्चंगर्भसमंपीठं तत्पीठेनदळेनवा ॥ ९ ॥
पीठोऽस्ताळयपीठस्य ळक्ष्मस्थित्यंशकल्पना ।
चतुर्दिक्षुविधेयावै बहुधानन्तपूर्विका ॥ ३७० ॥
अयोच्छ्रयन्तुचैक्षेत्रा त्रिगुणंमन्दिरस्यच ।
कुर्याद्व्यर्धगुणंचैव द्विगुणवायवेच्छया ॥ १ ॥
द्विरेकादशधाकुर्या त्पंचभागैस्समम्पुरा ।
विधेयंपीठवत्पश्चा देकांशेनमसूरकम् ॥ २ ॥
तदूर्ध्वनिहिताजंघा गर्भमानेनचोन्नता ।
भवोपकरणीयाभि र्देवताभिरलंकृता ॥ ३ ॥

जंघायामंशयुग्मेन उपयूनाधिकेनच ।
कार्यंशिखरपीठन्तु पूर्वलक्षणलक्षितम् ॥ ४ ॥
किन्तु प्रवेश निर्यासौ तत्रचार्धांशसम्मितौ ।
शिखरचारविहितं भूमिकानवकान्वितम् ॥ ५ ॥
सकोच्यततपुरासूत्र मादायोन्नतिसम्मितम् ।
एकस्मादेकवर्णात्तु जघोर्ध्वीपाद प्रसायेच ॥ ६ ॥
संस्पृशेत् शिखरपीठ मस्तकं निरोध्यच ।
मासादाद्बहिरायत्र भूभागेत्यमलेक्षण ॥ ७ ॥
कर्णादूर्ध्वं नयेत्सूत्र छाद्यमान क्रमणतु ।
शिखरोन्नतिपर्यन्त चतुर्दिक्ष्वेवमेवाहि ॥ ८ ॥
पर्यटेछाद्यमानन्तु कर्णात्र,र्ण महामते ।
यावद कुमुदपत्राभा सास्याच्छिखरमञ्जरी ॥ ९ ॥
एवमालेख्यदृष्ट्वातु उन्नायावन्तुनाततः ।
भूमिकाण्डप्रसिद्ध्यर्थं कार्यासादशधापुनः ॥ ३८० ॥
उपरिष्टात्तुभागेन भवदामलसारकम् ।
भूमयोभागमानास्तु ततस्तासांसमाचरेत् ॥ १ ॥
क्षयवृद्ध्याविधानन्तु त्यक्त्वास्थानंचभूमिकाम् ।
चतुस्त्रिद्व्येकसङ्ख्यानि सममानांगुलानिच ॥ २ ॥
निजभूमेस्समारभ्य तानियोज्यान्यध क्रमात् ।
पूर्वभूमेस्समारभ्य ह्यवस्थेभूमिकागणे ॥ ३ ॥
सर्वासांव्यवधानन्तु तद्बिरष्टांशसम्मितम् ।
विभिन्नापीठरचना तासुकार्यायथास्थिता ॥ ४ ॥
सचक्रैर्विविधै पद्मै प्रादुर्भावैस्तुचाखिलै. ।
सर्वैर्वालाञ्छनैर्मूर्तै नृत्तगीतरसास्थितै. ॥ ५ ॥
नवांशेनोर्ध्वभागात्तु स्वपादेनविनिर्गतम् ।
उष्णीषमूर्धभूमे स्तु कार्यं वै रचनोज्झितम् ॥ ६ ॥

शिष्टं कृत्वा त्रिधा पीठं मण्डळस्थेन पूर्ववत् ।
द्वितीयेन ततः कण्ठं तृतीयेनोर्ध्वगेनतु ॥ ७ ॥
सुसमं श्रीयुतं कुर्या दण्डं धात्री फलाण्डवत् ।
नवधोष्णीषकं कृत्वा चतुर्भि र्वेदिकाभ्रमम् ॥ ८ ॥
त्रिभागपृथुळं कण्ठ मण्डं पंचांगसम्मितम् ।
पंचधा सप्तधा कृत्वा गर्भ वा नवधा पुरा ॥ ९ ॥
विहाय पक्षगौ भागौ मध्यभागगणेनतु ।
प्रासादनाडिका कार्या गर्भार्धेन विनिर्गता ॥ ३९० ॥
पादेन वा त्रिभागेन सस्तम्भाप्यथ केवळा ।
उन्नता शिखरार्धेन साप्युत्पलदळोपमा ॥ १ ॥
कार्या शिखरपीठोर्ध्वे दिव्यकर्मविभूषिता ।
तत श्शुभतरं कुर्या न्मण्टपं स्तम्भसंयुतम् ॥ २ ॥
भूषितं विहगेन्द्रेण वळिमण्डलगेन च ।
चतुर्द्वारे तथा दिक्षु विधेयं मण्टपत्रयम् ॥ ३ ॥
प्रवेशत्रितयोपेतं मण्टपे मण्टपं भवेत् ।
कुर्या न्मण्टप मुक्तं वा यथाभिमतनिर्गमम् ॥ ४ ॥
रथोपरथकाद्यन्तु तेषां गर्भा द्विधीयते ।
निर्यासो दशमांशेन द्वादशांशेन लांगळिन् ॥ ५ ॥
अथवा षोडशांशेन ते कार्या नेमिवत्पुनः ।
चतुर्दिक्पक्षसळिमाः पीठकर्मविभूषिताः ॥ ६ ॥
शिखरस्य चतुर्दिक्षु पीठोपरि समापयेव ।
सम रथकयुक्तयातु नासिकामंजरीगणम् ॥ ७ ॥
मध्यदेशश्चतुर्दिक्षु कुर्याद्वारगणं समम् ।
त्रिचतुःपंचषट् भागे ततो गर्भा द्विधीयते ॥ ८ ॥
द्विगुणं चोन्नतत्वेन त्रिपञ्चनवशाखिकम् ।
युक्त द्वास्थंद्वयेनैव कुम्भभद्रशनैस्तु वा ॥ ९ ॥

विधिवत्स्थापनं तस्य मन्त्रपूर्वं समाचरेत् ।
संस्नाप्य मूलमन्त्रेण सम्पूज्याव्यांदिना हृदा ॥ ४०० ॥
शालामूलगतां कुर्या द्धातुरत्नमयीं स्थितिम् ।
सर्वधारामयं मन्त्रं सन्निरोध्याहि तत्र च ॥ १ ॥
ज्ञानक्रियात्मकं ध्यात्वा शिखामन्त्रेण शाश्वतम् ।
दक्षिणोत्तरभागाभ्यां शालायुग्मन्तु विन्यसेत् ॥ २ ॥
हृन्मन्त्रेण तदूर्ध्वेतु रूपाद्यं परमेश्वरम् ।
सन्निधीकृत्य सम्पूज्य गगनस्थे तुदुम्बरे ॥ ३ ॥
द्विविधं धातुजालन्तु रत्नं सिद्धार्थका स्तिलान् ।
चन्दनाद्यादिगन्धा ये क्षीरं दधिघृतं मधु ॥ ४ ॥
शालय स्सर्वबीजानि सर्वौषध्य स्सविद्रुमाः ।
कृत्वा नेत्रेण नेत्रस्थान् द्वारोर्ध्वे विनिवेश्य तान् ॥ ५ ॥
द्वयं भोगाप्तये चैव त्वद्वयं मोक्षसिद्धये ।
चतुष्पा त्सकलो धर्म स्तत्रोर्ध्वे सन्निरोध्य च ॥ ६ ॥
चत्वारिश्शृंगाइति मत्पाठये द्दङ्मयां स्ततः ।
कर्महोमचयं कृत्वा पूर्णां मूलेन पातयेत् ॥ ७ ॥
*एतद्विम्बप्रतिष्ठानात् प्राग्य त्यक्षा त्समाचरेत् ।*
सिद्धय [ स्थाय ] पेक्षावशेनैव ह्यालयस्यतुवैविभोः ॥ ८ ॥
अनन्तभुवनंनाम सर्वकामापवर्गदम् ।
चतुष्प्रकारमेर्थहि प्रासादंविद्धिपीठवत् ॥ ९ ॥
*रचनासन्निवेशोत्थ भेदेनानेकधातथा ।*
पतत्रीशमृगेन्द्रैस्तु निधिभूषोपमैर्घटैः ॥ ४१० ॥
शंखपद्मांकिताभिस्तु सोपानपदपङ्क्तिभिः ।
युक्तंद्वारवशेनैव तथापीठवशात्तुवै ॥ १ ॥
*विस्तारःप्रतिदिक्संस्थ स्सवहणस्य विधीयते ।*
गर्भोत्थक्षेत्रसंज्ञाच जगतीकस्यहांगलिन् ॥ २ ॥

द्वीपस्सजगतीकस्य तन्मानेनापिसर्वदिक्‌ ।
एभ्यःपादादिकंकुर्यात्‌ पादांशेऽंशितन्तुवै ॥ ३ ॥
मुख्याचायतनानांच संस्थितश्चांगने [ कणे ] पुरा ।
चतुरायतनंविद्धि प्रासादेःदिक्त्रयस्थितैः ॥ ४ ॥
आग्नेयसद्कोणस्थै स्तत्पंचायतनंस्मृतम्‌ ।
विद्धिपमष्टायतनं त्रिभिरन्यैस्तुदिग्गतैः ॥ ५ ॥
विनामद्धयस्थितैनैव दिग्गतैस्तु द्विभिर्दिभिः ।
तद्दशायतनन्तेन युक्तमेकाधिकं भवेत्‌ ॥ ६ ॥
प्रतोलीपक्षगेनैव प्रासादद्वितयेनतु ।
द्वादशायतनंविद्धि सहमध्यस्थितेनतु ॥ ७ ॥
तदेवाधिकसंज्ञन्तु अतोन्योनन्तसंज्ञिकः ।
परस्परमुखौकुर्या त्प्रासादौद्वारदेशगौ ॥ ८ ॥
प्रासादाभिमुखाश्चैव दिक्त्रयेवस्थितास्तुये ।
कोणस्थाभ्यांचसाम्मुख्यं द्वाभ्यांद्वाभ्यां विधीयते ॥ ९ ॥
द्वाभ्यामभिमताभ्यांतु कुर्यादुचितदिङ्मुखम्‌ ।
द्वौपरस्परवक्त्रौतु कोणदेशसमाश्रितौ ॥ ४२० ॥
द्वाराण्यनन्तायतने प्रासादानांमहामते ।
यथाभिमतदिक्स्थानि कर्तव्यान्यविशंकया ॥ १ ॥
नतत्रदेषांभवति वेधदोषःपरस्परम्‌ ।
अंगभावगतत्वाच्च प्रधानायतनस्यवै ॥ २ ॥
अर्धेन च त्रिभागेन हितःपादेनचांगणात्‌ ।
परण्डकस्यचोच्छ्राय स्तद्विस्तार स्तथोच्छ्रितेः ॥ ३ ॥
सचपीठोपमंकुर्यात्‌ श्लक्ष्णंसोष्णीपमेववा ।
युक्तंकोटिगणेनाथ नानादेवान्तगेनतु ॥ ४ ॥
यदेकायतनंचैव त्वंगनन्तन्महामते ।
युक्तंलघुपरण्डेन केवलंवापरण्डकम्‌ ॥ ५ ॥

यदाद्यायतनाद्यस्य द्वादशायतनान्तिमम् ।
एकदिग्वीक्षमाणंच चतुरश्रायतंगने ॥ ६ ॥
वृत्तायतेवायितते प्रासादेचोक्तलक्षणे ।
यस्माद्देवालयानांच अंगनानांविशेषतः ॥ ७ ॥
चतुरश्रादिपीठानां नित्यमेवमहामते ।
अन्योन्यानुगतंयन्तु हितंसापेक्षकंन्तुवै ॥ ८ ॥
भूमिभागवशेनैव तथैवार्चावशेनतु ।
नानाफलवशेनापि तथाशोभावशेनच ॥ ९ ॥
भूलाभश्चतुरश्रात्तु चतुरश्रायताद्धनम् ।
वर्तुला स्सर्वकामाप्ति निर्वृति स्तु तदायतात् ॥ ४३० ॥
दृष्टादृष्टफलेप्सूनां लोकास्तु महदादयः ।
यच्छन्ति वैष्णवं स्थान मारोग्यं भूति मुत्तमाम् ॥ १ ॥
वैष्णवाना मकामानां च्युते रन्ते परं पदम् ॥ ४३१२ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
प्रतिमाप्रासादलक्षणविधि र्नाम

## चतुर्विंशः परिच्छेदः ॥२४ ॥

---

## अथ पंचविंशः परिच्छेदः ।

---

श्रीनारदः ।

सर्वलोकगुरु विभो यदुक्तो विश्वधारिणा ।
तदिदानीं प्रवक्ष्यामि मन्त्रबिम्बनिवेशनम् ॥ १ ॥
भोगेप्सूनां च वर्णानां साम्प्रतं यदभीष्टदम् ।
कैवल्यदं शमाद्यैव चातुराश्रम्यसेविनाम् ॥ २ ॥

यद्यधर्मरतानां च सहार्यं च फलैस्तु तत ।
प्राग्वद्देवा्ऽस्याग्रे द्विकलाभे [ ग्भागे ] सति मण्टपम् ॥ ३ ॥
चतुरश्रं चतुर्द्वारं दर्भमालान्तरीकृतम् ।
अन्यत्र तदलाभेतु यथाभिमतदिङ्मुखम् ॥ ४ ॥
चतुर्दशकराच्चैव यावत्त्रिंशत्करावधि ।
षट्करान्तं पुन स्तस्मात् बिम्बमानव्यपेक्षया ॥ ५ ॥
कार्यो मध्ये स्थला तेषां द्विसप्तांशै स्ततोष्टभिः ।
समन्तभद्रा सुलक्षणा चितापक्वेष्टकादिकैः ॥ ६ ॥
तालोन्नते स्थगारभ्य सामान्येस्मिन् हि कर्मणि ।
उन्नतांगुलवृद्ध्यातु नीता तद्धास्तां क्रमात ॥ ७ ॥
द्वि[त्रि]ष्टकांशकैर्मध्ये सर्वासां मण्टपं [ ण्डलं ] भवेत् ।
चतुरश्रंचतुर्द्वारं चक्रांबुरुहभूषितम् ॥ ८ ॥
दक्षिणेशयनंसौम्ये कुण्डमग्नेस्तु पूर्ववत् ।
समेखलं द्विहस्तन्तु चक्रपद्माकितं शुभम् ॥ ९ ॥
तदध श्चतुरश्रं प्राग्दाममेखलिकान्वितम् ।
अथ दक्षिणदिग्भागे कुर्या द्वे चक्रचिह्नितम् ॥ १० ॥
वर्तुलं पश्चिमे सौम्ये कमलांकं मनोहरम् ।
शंखांकं सर्वकोणेषु मान मेषां यथोर्ध्वगे ॥ ११ ॥
सर्वे दशान्तहस्तानां चतुर्णा मेकमेखलाः ।
मण्टपानान्तु किं त्वत्र ऊर्ध्वगं सर्वमेखलम् ॥ १२ ॥
अतोध स्थंस्थिता स्सर्वे एककुण्डास्तु मण्टपाः ।
तेषां समेखलं चाद्यं द्वाविंशत्यंगुलं भवेत ॥१३ ॥
ह्रासो दंगुलयुग्मस्य याव द्वे षोडशांगुलम् ।
स्यात षट्करे गृहे कुण्डं कार्या वा मेखलाधिका ॥ १४ ॥
अष्टहस्तोच्छ्रितः पूर्वः अधोर्ध्वकरावधिताः ।
न ह्रास ष्षट्करान्तानां न्यूनाना मुच्छ्रिते भवेत ॥ १५ ॥

त्रयोदशकरादीनां चतुर्णां पातये ततः ।
अष्टकं चांगुळानां तु सप्त पंच चतुः क्रमात् ॥ १६ ॥
एवं स्नानगृहाणान्तु विस्तार श्चोन्नते स्सह ।
किन्तु यै वालुकापीठे मध्यत श्चोपशोभिताः ॥ १७ ॥
द्विचतुर्भि र्द्विसप्तं [ हस्तां ] शै र्विस्तृताः प्रागवदुन्नताः ।
स्नानीया यागगेहा द्वा दिक्त्रयेभिमते शुभम् ॥ १८ ॥
अर्धमानसमं मुख्यात् सुपीठशयनान्वितम् ।
द्दग्दानभवनं कुर्या न्मंगल्यकलशै स्सह ॥ १९ ॥
सर्वेषां कर्मभूभागं कोणस्तम्भै र्विभूषितम् ।
सुनेत्रै र्वेष्टितं कुर्या च्चक्राद्यैः पूर्ववद्युतम् ॥ २० ॥
सुस्थिरं दृढपादं च स्नानाम्भो ग्रहणक्षमम् ।
अर्धेन वालुकापीठ दीर्घमाद्यक्रमेण तु ॥२१ ॥
वर्धितं चाग्रहस्तेन ह्रासितं चतुरंगुलैः ।
स्वदैर्घ्या दर्धविस्तीर्णं कृत्वैवं समणाळकम् ॥ २२ ॥
तेन तद्वालुकापीठं भूषये न्मध्यगेनतु ।
यागागारस्य वै दिक्षु द्वारार्ध तत्र चान्तरे ॥ २३ ॥
शमार्धवृत्तियोगेन ह्रासोन्यत्र कळादिकः ।
तोरणानि बहिः कुर्यात दृढैः काष्ठै स्सुपूजितैः ॥ २४ ॥
पंच हस्तानि चार्धेन वर्धितानि करेणतु ।
न ह्रास माचरे त्तेषा मन्यत्र करणे सति ॥ २५ ॥
न[ द ] शमा त्पंच हस्ताना मृते भूमौ प्रवेशयेत् ।
शमार्ध वर्धितानां च द्वे द्वे संवर्धये त्कले ॥ २६ ॥
दैर्घ्या त्प्रवेशशिष्टात्तु त्रिभागेन तदन्तरम् ।
सर्वे चक्रध्वजाः कार्याः वस्त्रस्रङ्मञ्जरीयुताः ॥ २७ ॥
सुधाद्यै र्वर्णकैः पीतै श्चन्दनाद्यै स्तु लेपिताः ।
भिन्नांग मेत दखिलं यथैकस्मिन् हि युज्यते ॥ २८ ॥

कर्मयागगृहे शश्व द्विभूते वा वने विना ।
पंच त्रिंशत्करं क्षेत्रं स्वतुल्यांशेन विस्तृतम् ॥ २९ ॥
तन्मध्येतु चतुर्हस्तं त्यापाद्यं स्थळसप्तकम् ।
स्थळानां व्यवधानन्तु कुर्या द्वै ताळसम्मितम् ॥ ३० ॥
एकापायेन वै कुर्यात् द्विहस्तान्तं स्थळांगणम् ।
क्रमेणाष्टांगुळा न्मानात् द्व्यंगुळं द्व्यंगुळं विना ॥ ३१ ॥
स्थळानां संकटनां च व्यवधानं द्विगोळकम् ।
एव मेव समुच्छ्राय स्सर्वेषां परिकीर्तितः ॥ ३२ ॥
परितो विहितं वीधि मान मत्र स्वपीठजम् ।
एवं वासंकटे कुर्या दायोक्ता न्मण्टपद्वयात् ॥ ३३ ॥
मध्ये मण्डलपीठन्तु तस्य दक्षिणदिग्भवेत ।
समीपे शयनस्थानं कुम्भानां स्थापनायनम् ॥ ३४ ॥
एवं हि वामनिकटे भोगानां मन्त्रतर्पणम् ।
ऋग्यजुस्सामपूर्वाणां श्रुतीनां हवनं परे ॥ ३ ॥
प्राग्दानं शयनस्थाने ह्यन्यस्मिन् शयने हितम् ।
प्रासादस्याष्टदिङ्मूर्ति शक्तिपानां यथोदितम् ॥ ३६ ॥
स्थण्डिले ष्वथ कुण्डेषु तादर्थ्येनाथवा स्वयम् ।
स्वकुण्डे हवनं कुर्याच्चतुर्वेदमये परे ॥ ३७ ॥
समस्तमूर्तिपीयं वा स्वय मेव समाचरेत् ।
सामग्रीविरहा द्योग्य मूर्तिपाना मभावतः ॥ ३८ ॥
यश्च यत्रोपयोज्यस्तु तत्रतं सम्प्रवेशयेत ।
मन्त्राणा मुपदेष्टातु आत्मतुल्यो महामतिः ॥ ३९ ॥
योक्तव्यः कर्मदक्षस्तु सर्वे ष्ववसरेषुच ।
स्वयं वसवनुसन्धाय हवनार्चनकर्मणाम् ॥ ४० ॥
आरतेह्युत्पत्तिपूर्वाणां न्यासान्ताना मनन्यधीः ।
कृत्वा दीक्षाविधानोक्तं सहोमं कलशार्चनम् ॥ ४१ ॥

कुर्या स्सतोरणानां च ध्वजानां स्थापनं ततः ।
सितरक्तादिभेदेन प्रागादौ च ध्वजाष्टकम् ॥ ४२ ॥
निवेश्य मध्यवेद्यान्तु पुन स्त्वपरतस्तथा ।
यजे त्सत्यादिकं तत्तच्चतुष्कं द्वेव मेवहि ॥४३॥
तत देवा अवहित मृन्मयान् पाठये ततः ।
ऊर्ध्वं सह सुपर्णेन चक्रं तोरणगं यजेत् ॥ ४४ ॥
पाठयेत् द्वारपालीयं सामसामविद स्ततः ।
अथार्घ्यपुष्पहृन्मूर्तिधरे र्यायात् समावृतः ॥ ४५ ॥
यत्र तिष्ठति विश्वेशः पीठब्रह्मशिलान्वितः ।
तत्रावलोकनं तेषां कुर्या त्सन्ताडनादिकम् ॥४६॥
चक्रास्त्रमन्त्रिते स्स्नानकलशै स्स्नापये त्ततः ।
सिद्धार्थकै स्तथा पंचगव्य मृद्भूतिवारिणा ॥ ४७ ॥
वल्मीक मृज्जलेनाथ चक्रांकौषधिवारिणा ।
संक्षाल्याभ्यर्च्य चोद्धर्त्यं क्षाळये द्दभ्रवारिणा ॥४८॥
तमर्घ्येणार्चयित्वा च तत स्तन्मन्त्रितान् करे ।
सिद्धार्थकान् दक्षिणेतु बध्नाये पाठये द्दचम् ॥ ४९ ॥
रक्षोहणं तथा सर्वा त्रये त्प्रतिसरे मणीन् ।
सद्वस्त्रवेष्टितं कृत्वा समारोप्य रथोत्तमे ॥ ५० ॥
कर्मारम्भं चपठत स्तस्य दक्षिणदिङ्न्यसेत् ।
ऋक्सामपूर्वा न्वामेतु ब्राह्मणांस्तु चतु श्चतुः ॥ ५१ ॥
पुरतोस्त्रं स्मर न्यायात् स्वयं विप्रांस्तु सूदयन् ।
सनृत्तगेयवादित्र स्तुतिमंगळपाठकैः ॥ ५२ ॥
इदं विष्णु र्विचक्रम ऋङ्मये स्सह पाठयेत ।
एकायनांस्तदन्वेतु ॐ नमो ब्रह्मणेतु यत ॥ ५३ ॥
तथैव शाकुनं सूक्तं श्रीसूक्तेन समन्वितम् ।
स्वर्णादिनाथिन श्शक्त्या तर्पयं स्ता न्प्रवेशयेत ॥ ५४ ॥

स्वस्थानं यज्ञभूमेर्वं प्रासादाद्यन्तरन्तु वा ।
वक्ष्यमाणविधानेन युक्तं रत्नशिलादिना ॥५५॥
कृत्वा द्रव्याधिवासं मा कर्मभूमौ पुरोदितम् ।
स्नानकर्मशिलादीना मीप त्कृत्वातु सार्चनम् ॥५६ ॥
यथावद्रत्नविन्यासं प्रीतिपूर्वं निवेश्य च ।
बृह द्विम्बं ततः कुर्या त्कर्मबिम्बेखिलन्तु वै ॥५७॥
सन्निरोधस्तु मन्त्राणां तत्र ह्यग्रोदये स्मृतः ।
आवृहत्स्नापना त्सर्व यत्किञ्चि दथ तत्र तत ॥ ५८ ॥
निर्वर्तनीयं पूर्णान्तं बुध्वैवं प्राङ्‌ महामते ।
तथा कार्य शुभो येन मुहूर्तो नावसीदति ॥ ५९ ॥
एवं हि चित्रपूर्वाणा मन्येषां कमलेक्षण ।
सरत्नब्रह्मपाषाणवर्जितानां समाचरेत् ॥ ६० ॥
स्नानाद्यं कर्मबिम्बेतु तत्समीपेथ दर्पणे ।
कर्मबिम्बंविनान्येषां प्रस्वापाद्यंहिविष्टरे ॥ ६१ ॥
कुर्यात्प्रवेशपूर्वंतु सर्वमुत्सवपश्चिमम् ।
एवंप्रवेश्यतद्बिम्बं सांप्रतं विनिवेश्यच ॥ ६२ ॥
निषण्ण दृढकाष्ठोत्थ तोरणेस्त्वाहुतो स्ततः ।
निवेश्य स्नानकलशान् हेमाद्युत्थांस्तु निर्व्रणान् ॥ ६३ ॥
पूर्ववद्रचनोपेतान् सुसमांश्चाव वर्जितान् ।
निरीक्षणादि संशुद्धान् कृत्वा सहृदयेनतु ॥६४॥
द्वादशाक्षरमन्त्रेण मन्त्रयेत्तान्सकृत्सकृत् ।
तेनैव पूजयेत्पश्चात् अर्घ्यस्रक्चन्दनादिना ॥ ६५॥
तदाहरणहोमन्तु यथाशक्ति समाचरेत् ।
पूर्णांत मथ सम्पूर्य क्रमाद्द्रव्यं नियोजयेत ॥ ६६ ॥
पाद्या र्घ्याचमनीयार्थ द्रव्यैः पूर्वोदितै स्त्रयन् ।
नागाद्याद्यन्त मध्येभ्यो नदीमृत्तीर्थ सम्भवा ॥ ६७ ॥

ह्रदाद्वल्मीक शिखरात् गजदन्त क्षतक्षितात् ।
इलोत्था वृषशृंगोत्था शालिक्षेत्रेषु सम्भवा ॥ ६८ ॥
तथैव पद्म षण्डोत्था त्वेकस्मिन् गोमयं परे ।
वनदाहसमुद्भूतं तथैव च महानसात् ॥ ६९ ॥
त्रेताग्नि भस्मात्वपरे विनिवेश्यं घटान्तरे ।
अन्यस्मि पंचगव्यन्तु कुशोदक समन्वितम् ॥ ७० ॥
सघृतं तैलकुम्भन्तु चमसीवारि पूरितम् ।
पलाश खदिरा श्वत्थ शमी लोहित चन्दनम् ॥ ७१ ॥
कषायोदक मन्यस्मिन् परस्मि स्त्रिफलोदकम् ।
वचा शतावरी कन्या व्याघ्री सिंही कृतांजलिः ॥ ७२ ॥
गोलोमी सिंहलोमी च कुष्ठं भूतजटा तथा ।
महागरुड वेगाच कलशे न्यत्र लांगलिन् ॥ ७३ ॥
महानील [ निला ] गळूचीषा सहदेवी शतावरी ।
विष्णुक्रान्ताच कार्कोटी साह्वावह्नि शिखापरे ॥ ॥ ७४
यष्टीवराहकर्णीचा प्यन्यस्मिन् गजपिप्पली ।
श्रीफलाद्यानिचान्यस्मिन् पावनानिफलानिच ॥ ७५ ॥
दधि क्षीराज्य कुम्भाश्च द्वौ मधिक्षु रसान्वितौ ।
मूलान्यम्भोरुहाणांच तान्यन्यस्मि न्द्वयेन्यसेत् ॥ ७६ ॥
द्रुमाणां पावनानान्तु सक्षीराणां विशेषतः ।
पुष्पपत्र फलोपेत मेकस्मि न्मजरीगणम् ॥ ७७ ॥
जात्यादिकं मयैकस्मिन् कौसुमीय लताचयम् ।
रोचना रजनीयुग्मं बलामोटाच पद्मकम् ॥ ७८ ॥
इतिपंचक मेकस्मिन् दर्भा न्दूर्वांकुराणिच ।
सास्यं शाल्यंकुरचयं कलशेन्यत्रवै न्यसेत् ॥ ७९ ॥
सिद्धार्थकान् सितायांस्तु प्रियंगुं गन्धसंज्ञकम् ।
अपरस्मिन्नचसेत्कुंभे सहवैनागकेसरैः ॥ ८० ॥

ग्राम्याश्चौषधय स्तम्र सप्तारण्या घटद्वये ।
बाह्लीक चन्दनं चैव रसं कर्पूर संयुतम् ॥ ८१ ॥
चतुष्कमेतदपरे त्वन्यस्मि न्धातवश्शुभाः ।
ताम्रजाम्बूनदाद्यास्तु परेरत्नचयंमहत ॥ ८२ ॥
न्यसेद्विद्रुमजालंच द्वयो र्मुक्ताफलानिच ।
अर्घ्योदकमथैकस्मि न्नदीतीर्थोदकंद्वये ॥ ८३ ॥
सर्वौषधि घटंचैव सुशीताम्भोघट न्ततः ।
सुगन्धिपुष्पकलश श्चत्वारिंशास्त्वमीस्मृताः ॥ ८४ ॥
वामभागेतु देवस्य अग्निकोणादितोन्यसेत् ।
पुनरीशानकोणात्तु शयनेसप्तधान्यसेत् ॥ ८५ ॥
गन्धोदकेन सम्पूर्णा स्तथावायुपदावधि ।
सर्वाण्याधाररूढानि पूरितान्यमलांभसा ॥८६ ॥
मूलमन्त्रेणतद्वत्तु पूजयेद्द्वादशात्मना ।
संवेष्टयच पुरासूत्रै श्छादयेत्तदनन्तरम् ॥ ८७ ॥
विधानैस्सूत्रसम्बन्धै र्वस्त्रेणाच्छाद्यथैततः ।
तदर्पणावसानेथ शयनंकल्पयेद्द्विधा ॥ ८८ ॥
सर्वोपकरणोपेत मनन्तंतदधोयजेत् ।
प्रभवाप्यययोगेन तदूर्ध्वेसर्वगंप्रभुम् ॥ ८९ ॥
पाठयेत्सर्पसामाथ संज्ञां ज्ञानवल्लाभिकाम् ।
हुत्वाशताष्टसंख्यंच मूलंतदनुकल्पयेत ॥ ९० ॥
मण्डलंपावनैरागै स्सितायैर्मागलीयकैः ।
तदूनाधिकशान्त्यर्थ हुत्वाकुण्डगणन्ततः ॥ ९१ ॥
संस्कुर्यात प्रतिकुण्डस्य निकटेकुम्भमध्यगम् ।
प्रभवाप्यययोगेन चातुरात्म्यन्तु संयजेत ॥ ९२ ॥
हृदादियद्यादिकृस्थेषु विदिक्स्थेषु तदस्त्रराट् ।
दत्वातदर्थपूर्णान्तु पूर्णांपूर्णंचपाठयेत् ॥९३ ॥

एकायना न्यजुर्मया नाश्रावितदनन्तरम् ।
यथाक्रमन्त्रेणपुरा मङ्गल्यकलशांभसा ॥ ९४ ॥
संक्षिप्यबिम्बंतदनु स्नापयेत्तन्मृदम्भसा ।
पाठयेत्तचकूश्माण्डान् पवमन्त्राननन्तरम् ॥ ९५ ॥
ततोगोमयकुम्भेन इहगावःमपाठयेत् ।
भूतिस्त्वमितिमन्त्रेण पठ्यमानेनभूतिना ॥ ९६ ॥
पंचगव्येनतदनु पाटयेच्चतुरस्ततः ।
पूर्ववच्चततोभ्यज्य विधिवच्चमसांबुना ॥ ९७॥
क्षालयित्वार्चयित्वाच निवेश्यशयनान्तरे ।
नेत्राभिमन्त्रितांकृत्वा शलाकान्तैजसींस्वयम् ॥९८॥
संस्मरन्परमंज्योति रीक्षन्नेत्रेतु चोल्लिखेत् ।
सन्मन्त्रितेनशस्त्रेण शिल्पीस्नातोवलोकितः ॥ ९९ ॥
यथावत्प्रकटीकुर्यात विधिदृष्टेनकर्मणा ।
वारुणंपाठयेत्साम सहचान्द्रेणसामगान् ॥ १०० ॥
ततःपात्रद्वयेकृत्वा तैजसेमधुसर्पषी ।
वौषडन्तेनमूलेन सस्पूज्यजुहुयात्ततः ॥ १ ॥
सुश्वन्तममृतौघन्तु हृदाद्यन्तेनसेचयेत् ।
सन्मूर्ध्निशशिबिम्बन्तु प्यायेत्ताडनशान्तये ॥ २ ॥
सदक्षिणंशलाकायं दद्याच्छिल्पिजनायच ।
गोदानमाचरेत्पश्चात् गुरोराराधकस्ततः ॥ ३ ॥
यथाशक्ति तथान्येषां मूर्तिपानां च दक्षिणाः ।
दत्वा समाचरे त्पश्चा द्दाहं स्राप्यायनन्तु वै ॥ ४ ॥
आमूर्ध्नो द्वादशार्णन्तु मूर्त्यर्थ पूर्ववन्न्यसेत् ।
व्याप्तिसत्ता समायुक्ते संस्कृत्य प्रोक्षणादिना ॥ ५ ॥
पीठेवतार्य संवेष्टय वाससा ह्यधरोर्ध्वतः ।
अधःक्रमोदितैः कुम्भै र्द्विष्षोढावर्तिते हृदा ॥ ६ ॥

स्नापयेत् पाठयेद् द्विमान् ओषधीना मिति श्रुतिम् ।
या ओषधय इत्यादि ऋग्वेदांस्तदनन्तरम् ॥ ७ ॥
एवं दशावशिष्टान्वै स्तेचितेत कलशै स्तति ।
ततः कुम्भचतुष्केण चतुर्भि मूर्तिधारकैः ॥ ८ ॥
ऋक्सामपूर्वं विधिवत् स्नापनीयं च पाठयेत् ।
उदुत्तमं हि ऋग्वेदान् पाठये द्रविणं यजुः ॥ ९ ॥
ततस्तु वारुणं सामसामद्योथर्वेण स्ततः ।
अयं ते वरुणश्चेति पवित्रं ते ततो ऋचा ॥ ११० ॥
वसोः पवित्रं हि यजुः पाठयेत सामगांस्ततः ।
पवित्रं तेहि य स्सामवश्चोथैकायनां स्ततः ॥ १ ॥
मूर्तिपान् समुदायेन पावमानी चतुष्टयम् ।
तदन्तेतु परं मन्त्रं व्यूहीयं भगवानिति ॥ २ ॥
पवित्रमन्त्रं तदनु इदं विष्णु विचक्रमे ।
ततो विभवमन्त्रैस्तु सर्वं स्सम्मन्त्रितेन च ॥ ३ ॥
कुम्भेन सेचयित्वातु व्यूहमन्त्रैः परेणतु ।
स्नापयित्वा चयित्वातु जुहुयात साधितं शतम् ॥ ४ ॥
यथावत्मणवेनाथ ध्यामिं कृत्वा च पाठयेत ।
मामगामिति ऋग्वेदा नाग्नेनातु यजुर्मयान् ॥ ५ ॥
प्राणापानं हि यत्साम ततः प्राणाय वै नमः ।
यातव्येति परं मन्त्रं विप्रा नेकायनां स्ततः ॥ ६ ॥
ध्यानयुक्तो धिया सम्य क्पठे दाराधक स्ततः ।
ॐ ॥ आवाहया म्यमरबृन्दनताङ्घ्रियुग्मं
लक्ष्मीपतिं भुवनकारण मप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्ररूपम् ॥ ७ ॥

ध्येयं परं सकलवेदविदां च वेद्यं
वाराहकापिलनृकेसरिसौम्यमूर्तिम्।
श्रीवत्सकौस्तुभमहामणिभूषितांगम्
कौमोदकीकमलशंखरथांगहस्तम्॥ ८॥
सर्वत्रगोसि भगवन् किल यद्यपि त्वा
मावाहयामि हि यथा व्यजनेन वायुम्।
गूढो यथैव दहनो मथना दुपैति
ह्यावाहितोपि हि तथा त्व मुपैहि चार्चाम्॥ ९॥
मालाधराच्युत विभो परमब्रह्ममूर्ते
सर्वज्ञनाथ परमेश्वर सर्वशक्ते।
आगच्छ मे कुरुदयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्ययाद्य॥ १२०॥
ततो विसृज्य घस्त्रेण भोगैः पूर्वोदितैर्यजेत्।
अर्घ्यार्थे दक्षिणान्तैस्तु पाठयै द्वह्वृमयांस्ततः॥ १॥
अर्चामितेतिवैमन्त्रं सामयज्ञार्चितस्त्विति।
भगवानितितज्ज्ञांस्तु ततस्संतर्प्यतेनले॥ २॥
स्तुत्वाजितन्ते मन्त्रेण सामज्ञान् पाठयेत्पुनः।
सहगायत्रसाम्नातु तद्रथन्तरसंज्ञितम्॥ ३॥
प्रजप्य द्वादशार्णन्तु मुद्राम्बद्धा प्रणम्यच।
अष्टांगेनाथविज्ञाप्यो भगवान्भूतभावनः॥ ४॥
मूर्तिभूतेनरूपेण अनेनैवहिसांप्रतम्।
लोकानज्ञाततत्वांस्तु समाह्लादय नागरान्॥ ५॥
येनान्तस्सम्प्रविष्टेनं ईषत्कालवशात्तुवै।
जन्मान्तरसहस्रोत्था न्मोक्षमायान्तिकिल्बिषात्॥ ६॥
एवमत्यर्थ्योहि भगवां ल्लोकानुग्रहकृत्प्रभुः।
करावंघ्रिगतौकृत्वा पाठयेद्बह्वृचांस्ततः॥ ७॥

उत्तिष्ठेति ऋचो मन्त्रं कृत्वा ब्रह्मरथे स्थिरे ।
सुयन्त्रितेच क्षीराज्ये दध्योदनसमन्विते ॥ ८ ॥
दुर्भिक्षक्षामशान्त्यर्थं परमान्नफलैर्युते ।
पाठयेदस्यवामीय मृन्मयां स्तदनन्तरम् ॥ ९ ॥
तन्मयान्वलमन्त्रन्तु दशार्धेतिमहामते ।
स्वयमायन्तसंरुद्धं हृद्धातुकवचश्रवेत् ॥ १३० ॥
भ्रामयेद्वलिदानन्तु क्रियमाणन्तुसर्वदिक् ।
रत्नकाञ्चनवस्त्राणां पूर्ववत्क्षेपमाचरेत् ॥ १ ॥
दिव्याद्यायतनानांच कार्यापूजायथोदिता ।
पंचरात्रविदांचैव यतीनां ब्रह्मचारिणाम् ॥ २ ॥
षट्कर्मनिरतानांच दानन्दीनजनेष्वपि ।
रथस्थेमन्त्रबिम्बेतु यावत्पदशतं व्रजेत ॥ ३ ॥
सरथस्तूर्यघोषेण तावत्क्रतुफलम्बहु ।
आप्नोत्याराधकश्शश्वत् सकामोनियतव्रतः ॥ ४ ॥
ततस्तोरणदेशस्थं रथंकृत्वार्चयेत्प्रभुम् ।
पाद्यार्घ्यपुष्पधूपैस्तु नमस्कृत्यचपाठयेत् ॥ ५ ॥
उत्तिष्ठेतिद्विषट्कार्णं सजितन्तन्तु चाखिलम् ।
सम्पठन्पौरुषंसूक्तं यागवेश्मप्रवेशयेत ॥ ६ ॥
हृद्दाशयनगंकृत्वा यात्राहोमं समापयेत् ।
ततस्तच्छिरसोदेशे चक्राधारस्थितेघटे ॥ ७ ॥
पूर्वोक्तलक्षणेनेत्र मन्त्रसम्पुटितंयजेत् ।
पूजयित्वार्घ्यपुष्पाद्यै श्शयनस्थंचवैपुनः ॥ ८ ॥
मर्मणाच्छाद्यवस्त्रेण ततोग्निनिकटे विभोः ।
स्थित्वालांछनमन्त्रांस्तु यथास्थानगतान्नयेत ॥ ९ ॥
पादाद्वैद्वादशांगेषु ततोदामोदरादिकान् ।
तच्छक्तिकांस्तथामन्त्रान् भास्वद्व्यापक लक्षणान् ॥ १४० ॥

ऐश्वरेणाथ बीजेन यथावस्थेनभावयेत् ।
पादादितन्मयेनैव तद्वन्मन्त्रवरेणतु ॥ १ ॥
प्राग्वद्व्यपयुक्तयातु अन्तर्ज्योतिर्मयात्मना ।
विभुनावास्स्वरूपेण तदेवाथपरम्परम् ॥ २ ॥
सुशान्तंसर्वगम्बुध्वा निस्तरंगमिवोदधिम् ।
विश्रांगदामित्याद्यं त्वाठयेत त्वांचरात्रिकान् ॥ ३ ॥
देहस्थात्रयाथिकंमन्त्रं धारणाख्यमनन्तरम् ।
जीमूतस्येतिऋग्वेदा त्वासदासिञ्चपाठयेत ॥ ४ ॥
क्रमेणानेनभुक्त्वा[हुत्वा]तु पादार्धशतसंख्यया ।
तिलानान्तुतथाज्यस्य मन्त्रैरेभिर्महामते ॥ ५ ॥
दत्वापूर्णाहुतिंसम्य गुपसंहारलक्षणाम् ।
ततस्तत्परमंब्रह्म ह्युदितपूर्ववत्स्मरेत् ॥ ६ ॥
सर्वशक्तिमयेनैव स्वभावेनस्वकेनतु ।
ओजोबलात्मनायद्वत् गन्धद्रव्यात्मनातुवै ॥ ७ ॥
बीजन्तस्स्वरूपेण समुद्रोबुद्बुदात्मना ।
एवमव्यपदेश्याया श्शक्तेस्स्वैशक्तिदर्पणे ॥ ८ ॥
स्थितिमादायविश्वेश. स्वातन्त्र्यान्नमहामते ।
मन्त्ररूपान्ततुन्वत्ते सम्यगाराधनायच ॥ ९ ॥
नानात्वमुपयातस्य प्रसरन्तस्यचस्वयम् ।
निष्प्रभत्वप्रयातस्य चिद्वीजनिचयस्यच ॥ १५० ॥
आविष्कृतस्यभेदेना प्यमूर्तेनबलीयसा ।
अज्ञानगहनेनैव नित्यानित्यमयात्मना ॥ १ ॥
स्मृत्वैवमूलमन्त्रन्तु बिम्बहृत्पद्मगंस्मरेत् ।
षट्शक्तिकिरणोपेतै स्तैस्तद्रूव्यमयीन्ततुम् ॥ २ ॥
संस्मरेत्मद्गस्तच प्रागुक्तेनैववर्त्मना ।
स्वरूपममलम्भूय स्मरेन्मूर्त्यात्मनाततः ॥ ३ ॥

नयन्संपूर्वविधिना एवंसपरमेश्वरः ।
मन्त्रात्मनाभ्वतन्त्रत्व मुपयावोयदातदा ॥ ४ ॥
सहस्रशिरसन्देव मितिस [ स्यध ] वाँस्तु चोदयेत् ।
पाठयेत ब्राह्मणान्धातर्यध्यक्षेति च मन्त्रराट् ॥ ५ ॥
योविश्वतश्चक्षुरिति यातव्योभवतीतिच ।
द्वासुपर्णेतितदनु अतोदेवेतिवैपुनः ॥ ६ ॥
ऋङ्मयान्पौरुषं सूक्तंततःपरतमात्वि [ न्निवति ] ति ।
ततोर्चयित्वामन्त्रेशं शयनेबिम्बमूर्तिगम् ॥ ७ ॥
नित्यसन्निधिसिद्ध्यर्थं मासमासिन्तुमण्डले ।
संरोद्धयसन्निधीकृत्य महताविभवेनतु ॥ ८ ॥
सांगंसन्तर्प्यविधिवत सहमूर्तिं धरैस्ततः ।
स्वमूर्तिकुम्भान्मन्त्रेण जलमुद्धृत्यभाजने ॥ ९ ॥
बिम्बमूर्ध्निक्रमाद्देयं सर्वैरेकायनादिकैः ।
सन्तर्पयित्वातदनु मन्त्रंसपरिवारकम् ॥ १६० ॥
आज्यादिनाप्रभूतेन दत्वापूर्णाहुतिन्ततः ।
बिम्बात्मनाप्रयातानां क्ष्मादीनां मंगरूपिणाम् ॥ १ ॥
आपादानेपिपूर्णत्वाद पिण्डीभावार्थमेवच ।
आरम्भादेवजातानां छिद्राणांशमनेतुवै ॥ २ ॥
आप्यायनार्थमन्त्राणां द्रव्यैर्होमंसमाचरेत ।
द्विषट्केनाहुतीनान्तु एकैकेनचतुर्दश ॥ ३ ॥
आचाग्रे जानुपर्यन्त स्पृष्ट्वाज्यं होमये त्पुरा ।
आनाभिजानुदेशाच्च तथैव जुहुया दधि ॥ ४ ॥
नाभे राकर्णतः क्षीर माकर्णा दाशिरो मधु ।
सम्मेळ्य जुहुया त्सर्वं स्पृष्ट्वा देहन्तु चाखिलम् ॥ ५ ॥
संस्कृत्य बिम्बवत्पीठं भिन्नं ब्रह्मशिलां तथा ।
प्राणाभिमानदेवं या यस्य यो विदित स्तु वै ॥ ६ ॥

घेष्टयित्वाम्बरे क्षिप्ते श्वक्रमन्त्रेण वै ततः ।
कार्यो मध्यशिलाहोम श्शताष्टाधिकसंख्यया ॥ ७ ॥
गायत्रीभि स्तदर्थं च बह्वृचाद्यैः पृथ क्पृथक् ।
अजस्य नाभाविव्यादिमन्त्रै रेकायनै स्ततः ॥ ८ ॥
अध्याधिभूतमूर्तन्तु भोग्यं चापि पृथ क्स्थितम् ।
देवतानां त्वधिष्ठानं पीठं कृत्वा थ बुद्धिगम् ॥ ९ ॥
होतव्यं प्रणवेनैव स्वयं व्याहृतिभि स्तुतैः ।
अपरे मूलमन्त्रेण प्रणवान्तेन लांगलिन् ॥ १७० ॥
ततो वाहनमन्त्रेण तर्पणीय स्सदैवहि ।
स्वनाम्ना प्रणवेनैव स्वाहान्तेनापरे स्ततः ॥ १ ॥
संरोध स्तर्पितानान्तु कार्यः पूर्णान्त एव हि ।
साम्भसा विष्टरेणैव भावेन सजपेनच ॥ २ ॥
सर्वेश्वरस्य देवस्य स्वकीयासु च मूर्तिषु ।
शब्दात्मिकासु मूर्तासु तद्वच्छ्रुतिमयस्य च ॥ ३ ॥
कृत्वैवंच यथादिक्षु मूर्तिपान् विनिवेश्य च ।
पार्श्वदेशेषु कुण्डानां तर्पये त्पायसेनतु ॥ ४ ॥
गृहीत्वा दक्षिणां मन्त्रः प्रीणनीयस्तु तै स्ततः ।
अथ निद्रायमाणन्तु देवं स्मृत्वावकुण्ठ्य च ॥ ५ ॥
अर्चयित्वा नमस्कृत्य तत्र सर्वान् प्रवेशयेद ।
स्तुतिपाठकपूर्वांस्तु नृत्तगेयपरायणान् ॥ ६ ॥
विदिक्स्थान् प्रणवे जापे द्वादशार्णेन दिक्स्थितान् ।
सार्घ्यपुष्पाक्षतकरः प्रासादन्तं व्रजेत्ततः ॥ ७ ॥
हन्यात सिद्धार्थकै स्तस्मा द्विघ्ना नस्त्राभिमन्त्रितैः ।
प्राङ्मध्ये विधिनानेन श्वभ्रं वा साम्प्रतं खनेत् ॥ ८ ॥
विनिश्चितं यथा मानं गार्भं कुर्यात्तु सप्तधा ।
द्वारदेशा त्समारभ्य समै स्सूत्रैस्तु सर्वदिक् ॥ ९ ॥

द्वारमध्ये पदान्तन्तु पादाना मधिदेवताः ।
पिशाचो न्मानषा देवा परमः पुरुषो हि यः ॥ १८० ॥
चातुरात्म्यं विनान्येषां स्थापितानां महामते ।
आराधनं च स्वस्थाना दचिरादेव सिद्धिकृत् ॥ १ ॥
आक्रम्य देवभागं च देव आराध्यते यदि ।
भवन्ति बहवो विघ्नाः वर्जनीया स्ततस्तु सः ॥ २ ॥
शुभेन भद्रपीठेन दैवीयेनाथ लांगलिन् ।
चातुरात्म्यप्रतिष्ठायां शिलाख्यं मध्यमं पदम् ॥ ३ ॥
गर्भमध्यपदस्योर्ध्वे योजनीयं प्रयत्नतः ।
अतोन्वितांश मेकन्तु त्यक्त्वा वै पृष्ठदेशतः ॥ ४ ॥
शिलापदद्वयस्यान्ते योजनीया महामते ।
अग्रदेशेथ बिम्बस्य वेदि भागद्वयोपरि ॥ ५ ॥
चतुरश्रायतस्यैतत पीठस्यस्थापनेहितम् ।
एवंद्विचतुरश्रस्य विधानंकिन्तुलांगलिन् ॥ ६ ॥
संचार्यात्वग्रतोवेदि नित्यमाराधनार्थतः ।
पीठोपर्यथवादेवं यस्त्वाराधयतेसदा ॥ ७ ॥
निवेशनीयावैतेन मध्यदेशेनसाशिला ।
एवमाराधनवशा तथाफलवशात्तुवै ॥ ८ ॥
सपीठानांचबिम्बानां कार्यसम्यङ्निवेशनम् ।
देवमानुषभागाञ्च वेदिकामुष्मिकम्भवेत् ॥ ९ ॥
विबुधब्रह्मभागाच्च सैहिकन्तुगुणाष्टकम् ।
अपवर्गेतुसामान्य मकामानामयंविधिः ॥ १९० ॥
भिन्नेपेक्षावशान्मध्ये सतिभूयस्समाचरेत् ।
गालितेस्त्वांबुनालिप्ते ह्रदावैचन्दनादिना ॥ १ ॥
श्वभ्रेयोधटरुद्धानां मन्त्राणांचनिरोधनम् ।
पूर्वोक्तेनविधानेन पिधायवैस्थेयनेतथा ॥ २ ॥

कृत्वार्चनंयथोद्दिष्टं पूर्णान्तंतत्रविन्यसेत् ।
चाङ्गुलयेनतुपट्टंच चतुर्गोळकसम्मिताम् ॥ ३ ॥
पीठाद्विनिर्गतांकिंचित् भूतमेसुस्थिरांशिलाम् ।
अस्तांपीठेनमुक्तयर्थं नवरत्नभकृताम्पुरा ॥ ४ ॥
सुमन्त्रेणतुतत्रापि प्रतिष्ठासीतिपाठयेत् ।
प्रागादौप्राभवेनाथ पंचकंपंचकंन्यसेत् ॥ ५ ॥
शिलाघदेषुद्रव्याणां तत्रवज्रश्वहाटकम् ।
हरितालमुशीरंच श्रीहृयोदक्षिणेत्वथ ॥ ६ ॥
पाष्टिकांसर्वीशदिग्वाय्वोः पुष्परागोहरीतकी ।
मध्येसर्वाणितदनु ततोगर्तगणन्तुतत् ॥ ७ ॥
लेपैराच्छादितंकृत्वा सांगमन्त्रंपदेपदे ।
पूजयित्वाप्सुवेदां श्वमपङ्क्तांश्चपाठयेत् ॥ ८ ॥
तदूर्ध्वंविन्यसेत्पीठं तच्छ्वभ्रेविनिवेश्यच ।
अष्टलोहमयंचक्रं तदूर्ध्वेतुमहामते ॥ ९ ॥
द्वादशाख्यादिशेषोऽथा द्याधारोयस्ययःस्वकः ।
हैमंतदूर्ध्वेकमलं तजंवाताम्रमेववा ॥ २०० ॥
यथाक्रमस्थितंहेत त्पंचकंचतुरात्मनि ।
न्यसेदनन्तंचक्रस्य मीनकूर्मौकृतस्यच ॥ १ ॥
सर्वस्यविदितंपद्मं तस्यानन्तन्तुविन्यसेत् ।
मण्टपेतुखगेशस्य चक्रेस्थापनकर्मणि ॥ २ ॥
न्यस्यपूर्वान्तिकंकृत्वा कर्मण्यत्रचतर्पणम् ।
सद्मूर्तिधरैःप्राग्वत् कार्यादर्भोदकक्रिया ॥ ३ ॥
ततःप्रबोधयेद्देवं अर्चयित्वा इदंपठेत् ।
मन्त्रात्मनूरूपमात्मीय मामेयमुपसंहर ॥ ४ ॥
समाश्रयस्वसौम्यत्वं स्थित्यर्थंपरमेश्वर ।
नमस्तेस्तुहृषीकेश उत्तिष्ठपरमेश्वर ॥ ५ ॥

मदनुग्रहहेतवर्थ पीठभूमिसमाश्रय ।
उद्घास्यहृदयेनाथ त्यक्तनिद्रन्तुमन्त्रर ट् ॥ ६ ॥
उत्थाप्यमूर्तिमन्त्रेण सहमूर्तिधरैर्बलात ।
तोरणेनचनिष्क्रम्य प्रदक्षिणचतुष्टयम् ॥ ७ ॥
कुर्यात्प्रासादपीठस्य द्वाराग्रेसन्निरोध्यच ।
पाद्यार्घ्यचिमनन्दत्वा हन्मन्त्रेणप्रवेशयेत् ॥ ८ ॥
शाखाग्रमस्पृशन्तंच पाठयेत्तद्विदस्ततः ।
चतुश्चक्रेतितदन्तु पुरमेकादशेतियत् ॥ ९ ॥
वर्माभिमन्त्रितेनाथ दुकूलेनसितेनच ।
पादांबुरुहनाळम्भा द्विशाखामन्त्रेणवेष्टयेत् ॥ २१० ॥
अग्नीषोमौसमीकृत्य प्रणवाद्यन्तगेनतु ।
निवेश्यमूलमन्त्रेण वामतोमारुतंत्यजेत् ॥ १ ॥
प्रतिष्ठालिंगशब्दौच द्वौमन्त्रौ पाठयेत्क्रमात ।
शांतम्ब्रह्ममयंरूपं स्वकंसमवलम्ब्यच ॥ २ ॥
यतोहितार्थसर्वेषां निर्गतष्पड्गुणात्मना ।
अतोब्रह्मपदादीष द्वेषभागेसमानयेत् ॥ ३ ॥
मोक्षादिफलसिद्धीनां प्राप्तयेत्वविचारतः ।
करस्थमथमोक्तव्यं कौतुकंहृदयेनतु ॥ ४ ॥
सर्वांगमर्घ्यमन्त्रेण दत्वामूलमनुस्मरेत् ।
इतिसामान्यसन्धानं प्राक्कृत्वातद्विशेष्यच ॥ ५ ॥
हृदास्त्रपरिजप्तेन वज्रलेपेनवैततः ।
बिम्बपीठशिलानांतु एकत्वेनाचरेत्स्थितिम् ॥ ६ ॥
मूलमन्त्रन्ततोध्यात्वा सुशान्तब्रह्मलक्षणम् ।
आधाराद्ध्वजान्तं व्याप्तन्तेनाखिलंस्मरेत् ॥ ७ ॥
इतिसामान्यसन्धानं प्राक्कृत्वातद्विशेष्यते ।
स्थूलसूक्ष्मपरत्वेन स्थूलंषोडाशिलान्तगम् ॥ ८ ॥

पिण्डिकायां तथासूक्ष्मं तत्परंबिम्बविग्रहे ।
विन्यासंपीठमूलेथ देवतानां समाचरेत् ॥ ९ ॥
भवोपकरणीयानां पीठोर्ध्वेत्वथतद्विना ।
न्यसेद्विभवदेवांस्तु उपर्युपरिपूर्ववत ॥ २२० ॥
घटोद्देशात्समारभ्य परमर्चागतन्ततः ।
एवंहिसर्वदेवानां सन्निवेशवशात्तुवै ॥ १ ॥
चिन्तामणिमयोन्यासः कृतोभवतिसिद्धिदः ।
अथमण्डपमध्येतु देवदेवस्यसम्मुखम् ॥ २ ॥
स्थितेपितन्मुहूर्तान्ते स्थापनीयश्चपक्षिराट् ।
स्नातोनुलिप्तोमन्त्रेण स्वेनयस्संस्कृत.पुरा ॥ ३ ॥
ह्यशक्तयासदबिम्बेन यस्माद्भिन्नेषुवस्तुषु ।
बिम्बसन्निकटस्थेषु अथवान्यत्रलांगलिन् ॥ ४ ॥
तात्कालमंगभावत्वं ब्रजमानेषुसर्वथा ।
हवनांतचनिश्शेषं ध्यानार्चनपुरस्सरम् ॥ ५ ॥
स्वयमेवानुरूपेण कर्मसामान्यतांत्यजेत् ।
तस्मात्तथागभवनात उत्थाप्यादायबिम्बवत् ॥ ६ ॥
देवंप्रदक्षिणीकृत्य प्राग्वत्संस्थापनावनौ ।
एकस्मिन्मध्यरन्ध्रेतु वज्राद्यंपंचकंन्यसेत् ॥ ७ ॥
एकएवतदूर्ध्वेध आधारोय उदीरितः ।
प्राग्वन्निवेशनीयंच तत्पीठोर्ध्वास्तुभावनाः ॥ ८ ॥
भावनीयं शरीरेच शेषं विज्ञप्तिलक्षणम् ।
पालये द्राह्मणां स्तद्धस्तुपर्णोसीति मन्त्रराट् ॥ ९ ॥
तमेवाभ्यर्चितं कृत्वा यावा देवनिकेतनम् ।
कलशै. पृष्ठभागस्थै स्स्नापनीय स्ततो विभुः ॥ २३० ॥
सह मूर्तिधरै स्सर्वै र्यथाचानुक्रमेणतु ।
सदाघमर्षणेनैव गायत्र्या चर्तितेनतु ॥ १ ॥

प्रागूर्ध्वमपरतु तदनु चतुर्धावर्तिते स्वयम् ।
हृदाद्यावर्तिते चद्भिर्यजुर्दक्षिणेन सेचयेत् ॥ २ ॥
भूप स्वयं तथा कुम्भे स्सामवित् स्नापयेत्ततः ।
षड्भि स्त्यै स्स्वयं पश्चात् तेनैवाथर्ववित्ततः ॥ ३ ॥
पवित्राद्यर्जिते रेवं कळशै रन्तरान्तरा ।
सह चैकायनीयैस्तु स्नपनीय मनन्तरम् ॥ ४ ॥
चतुर्मूर्तिमयै र्मन्त्रैः बहुशः परिभावितैः ।
स्नापये त्कळशेनाथ शेष मादाय वै घटम् ॥ ५ ॥
तच्छतावर्तितं कृत्वा समूलेनाद्य मूर्तिना ।
सार्धं वै देवदेवस्य मूर्ध्नि चोत्क्षिप्य पाठयेत् ॥ ६ ॥
जितन्त इति वै सर्वा स्ततश्चाखोदकेन च ।
प्रासादं शोधयित्वा च स्नानवर्जं समाचरेत् ॥ ७ ॥
पूर्वोक्त मासनाद्यं यद्यागदानावसानिकम् ।
सदक्षिणं विशेषेण गुरौ मूर्तिधरेष्वथ ॥ ८ ॥
देवं प्रणम्य विज्ञाप्य कर्मणा मनसा गिरा ।
स्वमर्चान्तर्गतो देव मया यच्छयतादिषु ॥ ९ ॥
नीतोसि चाभिमुख्यन्तु क्षन्तव्यं तन्ममाच्युत ।
एवं प्रणम्य विज्ञाप्य क्षान्त्वा निष्क्रम्य सम्मुखम् ॥ २४० ॥
आचम्य च बलिं दत्वा याया देवगृहं ततः ।
तत्रासनादिकै रिष्ट्वा स्नानान्तैः पूर्ववत्प्रभुम् ॥ १ ॥
अपनीताम्बरैः कुम्भै र्धान्यपीठोपरि स्थितैः ।
हृन्मन्त्रपूजिते र्भूप स्सलिलेन सुपूरितैः ॥ २ ॥
सह मूर्तिधरैः प्रागवदन्तरान्तरयोगतः ।
कार्यं वा स्नानकर्माथ विधिदृष्टेन कर्मणा ॥ ३ ॥
निरोदकेथ प्रासादे पुन राराध्य पूर्ववत् ।
भोगै रासनपूर्वैस्तु सम्प्रदानान्त मच्युतम् ॥ ४ ॥

मुद्रां बध्वा जपे न्मन्त्रं स्तुत्वा क्षान्तया यदि मंजेत् ।
शतं सहस्रं साष्टं वा जुहुया न्मन्त्रराट् स्वयम् ॥ ५ ॥
सांगं सपरिवारं च संहितोच्चारयुक्तितः ।
मूर्त्याद्यैः मणवाद्याभि र्गायत्रीभि श्शतं शतम् ॥ ६ ॥
एकायने रभिज्ञाभि स्स्वकीयाभिस्तु तत्समम् ।
प्रदापये त्ततः पूर्णां मृग्वेदाद्यां स्तु मूर्तिपान् ॥ ७ ॥
एकायनांस्तदन्तेतु क्रमात्तान्पाठयेत्ततः ।
पूर्णांत्पूर्णेतिचैमन्त्र माद्यात्पूर्णमर्त्तातियत् ॥ ८ ॥
सनमस्केनमन्त्रेण स्वयंसांगेन निक्षिपेत् ।
बलिभिस्तुततस्सर्वान् भूतपूर्वांस्तुतर्पयेत ॥ ९ ॥
प्रविश्याचम्यतदनु क्षान्त्वादेवन्तुकुम्भगम् ।
पूर्ववन्मण्डलस्थन्तु कुण्डस्थन्तदनन्तरम् ॥ २५० ॥
भूषयेद्गुरुपूर्वांस्तु भूषणैः कटकादिकैः ।
गुरोर्वागुरुपुत्रस्य यागद्रव्यं निवेदयेत् ॥ १ ॥
बिम्बमेकायनान्तन्तु सर्वसाधनसंयुतम् ।
दासीकर्मकरोपेतं शुद्धदेवळकान्वितम् ॥ २ ॥
शैलोत्थं पूर्ववत्कुम्भं कृत्वाधातुमयन्तुवा ।
तद्विगोळकमानेन मन्त्रबिम्बेनवैसह ॥ ३ ॥
शुभेन्यस्मिन्दिनेयाग मण्टपेह्युक्तलक्षणे ।
अधिवासयथान्यायं सर्वोपकरणान्वितम् ॥ ४ ॥
स्नानाद्यमखिलन्ताभ्या मापाद्यचयथाविधि ।
तस्मिन्हृदादिसंयुक्ते बिम्बंकुम्भेनिवेशयच ॥ ५ ॥
वस्त्रैराभरणैःपुष्पै स्स्वच्छंकृत्वाद्यं पुष्पहृत ।
शनैःप्रासादपर्यन्त मारोहेन्मूर्तिपैस्सह ॥ ६ ॥
तत्रप्रागासनाद्यांस्तु कृत्वासंक्षाळनान्तिमान् ।
आचरेद्बीजविन्यासं सर्ववाद्यनादितम् ॥ ७ ॥

निवेश्यानीयतन्मध्ये विम्बंकुम्भसमन्वितम् ।
इत्याद्यन्तनिरुद्धेन मूलमन्त्रेणलांगलिन् ॥ ८ ॥
तत्राह्यमनुसन्धान मेवं कृत्वापरात्मकम् ।
सामान्यलक्षणं पश्चा त्पूर्वोद्दिष्टेनवर्त्मना ॥ ९ ॥
समालभ्यार्चयित्वाच स्रगाद्यैर्मण्टपेततः ।
पूर्ववत्पाठयेद्विप्रान् तत्प्रतिष्ठापनेतुवै ॥ २६० ॥
संरोध्यवर्ममन्त्रन्तु तत्रध्यानधियास्वयम् ।
पूर्णांतमखिलंकृत्वा विधिनानेनवैपुनः ॥ १ ॥
आरोहेतितुवैसाम पाठयेत्साम्गास्तुवै ।
चक्रमामलसारस्य मध्यतःसन्निवेशयेत ॥ २ ॥
यथाभिमतरूपन्तु दिग्वक्त्रंवाम्बराननम् ।
स्वशक्तिवर्णदण्डस्थं चण्डमार्ताण्डभासुरम् ॥ ३ ॥
चक्रमन्त्रंन्यसेत्तस्मि न्वर्णध्वानम्पुरोदितम् ।
गत्यागतिप्रयोगेन प्राक्प्रमेयजलक्षणम् ॥ ४ ॥
नान्यथावत्पुराज्ञात्वा द्रव्यमूर्तित्वमागतम् ।
कुर्यात्ततोर्ध्वसन्धानं नान्यथातुमहामते ॥ ५ ॥
अमलंशांतसंज्ञंवै तथाशांतोदितोदितम् ।
एवमेवहितन्मूर्ति यश्चक्रंवेत्तितत्वतः ॥ ६ ॥
सोस्मिन्संसारचक्रेतु सर्वाश्रमनिवासिनाम् ।
सर्वधर्मरतानांच चक्रमूर्तित्वमाप्नुयात ॥ ७ ॥
यच्छक्तिर्ब्रह्ममूर्त्यैव सिद्धामाक्षान्निराश्रया ।
अन्तर्बहिस्थं सर्वेषां मोक्षदंचामलंस्मृतम् ॥ ८ ॥
क्षीरोदार्णवतुल्यंच त्सहस्रादित्यसन्निभम् ।
निरंगन्तीक्ष्णधारंवै तच्छान्ताख्यंहियोगतः ॥ ९ ॥
यत्तनानांगभावेन स्वातन्त्र्यात्स्वयमेवहि ।
सर्वदिक्प्रसृतांकृत्वा स्वात्मवृत्तिंहिवर्तते ॥ २७० ॥

ईषद्वलयवर्णाभे नराणामन्तरेखवत् ।
शांतोदितंच तद्विद्धि चक्रमिच्छामदंचयत् ॥ १ ॥
यावन्मूर्तौचसम्बन्ध स्सर्वकृत्वावतिष्ठते ।
प्रवृत्तं नाभिपूर्वन्तु उदिताख्यं हि चक्रराट् ॥ २ ॥
तस्मि न्नाराधितो मन्त्र स्तद्वै सम्पूजित स्मृतम् ।
जप्तं सन्तर्पितं भक्त्या सर्वेषां सर्व मृच्छति ॥ ३ ॥
एवं चाभिमतं चक्रं सर्वविघ्नक्षयंकरम् ।
प्रतिष्ठाप्य समभ्यर्च्य तस्यैव समनन्तरम् ॥ ४ ॥
स्वंशेन शिखरा दुर्ध्वं खगराट्परिभूषितम् ।
संस्कृत्य ध्वजदण्डंच शिखामन्त्रेण विन्यसेत् ॥ ५ ॥
ततो विविधवर्णं च किंकिणीगणभूषितम् ।
ध्वजाग्रा च्छिखरार्धं च यावद्दीर्घं मकृत्रिमम् ॥ ६ ॥
दैर्घ्याद्द्वादशमांशेन द्विनवांशेनवाततम् ।
कृत्वास्त्रसन्निधिं तस्मिन् लांछनाख्ये पुरा पटे ॥ ७ ॥
निवेश्य ध्वजदण्डाग्रे गन्धाद्यै रर्चये त्ततः ।
स्वयंकृतानां बिम्बानां मयेदं सम्प्रकाशितम् ॥ ८ ॥
प्रतिष्ठापन मब्जाक्ष स्वतन्त्रे ष्वयनेषु च ।
सांकर्येण विना स्वेवं कृतं भवति सिद्धिदम् ॥ ९ ॥
अन्यथा सिद्धिदं विद्धि नृणां व्यामिश्रयाजिनाम् ।
एकस्मि न्नासने स्थाने चतुस्त्रिद्व्यादिमूर्तिना ॥ २८० ॥
व्यक्तीभूतं यथा लोके लोकानुग्रहकाम्यया ।
स्वयं नानास्वरूपेण स्वर्गादौ स्थापनं तथा ॥ १ ॥
न कार्यं मनुजै र्वर्ण धर्मज्ञै र्नैकभावनै ।
तथा वै समबुद्धिस्थैः कृपया सम्प्रवर्तकैः ॥ २ ॥
क्रियाभेदरतै श्शुद्धै र्नानाविबुधराजकैः ।
प्रणवैकप्रलापस्थै श्शान्तचित्तै रमत्सरैः ॥ ३ ॥

मन्त्रमुद्राक्रमध्यान सम्भूतिलयलक्षकैः ।
तथा तत्संकरोत्पन्नदोषाणां ध्वंसनक्षमैः ॥ ४ ॥
प्रस्थापितस्तु वै सम्यक् ज्ञानमूर्ति जगद्गुरुः ।
भिन्नमन्त्रक्रियारूपं न कुर्या त्तदपेक्षया ॥ ५ ॥
साधार मालयं पीठं भवाख्यं विभवात्मनाम् ।
देवानां मर्त्यधर्मस्थैः प्रतिष्ठा यज्ञकर्मणि ॥ ६ ॥
संसारदेवतानां च स्थापितानां तु वै पुरा ।
कृत्वातु भगवद्बिम्ब मालयेचा तदासने ॥ ७ ॥
निवेशयति यो मोहात् बिम्बेन सह तस्य वै ।
जायते च भयं घोर मिहामुष्मिकदोषदम् ॥ ८ ॥
नाप्नोत्याराधकानान्तु सकाशा दर्चनं परम् ।
यथा चिस्वं तथा कर्ता नाप्नुया दुत्तमं फलम् ॥ ९ ॥
अर्चाया माधिके पीठे ह्यपेक्षा लक्षणोज्झिते ।
शक्त्द्भिवदेवानां स्थापनं न विरोधकृत् ॥ २९० ॥
नान्यकाले न चान्यस्य नान्यमूर्तिनिवेशनम् ।
विहितं भगवत्पीठे विनष्टप्रत्ययं विना ॥ १ ॥
यथा भयोपकरण देवानां मण्डलेऽर्चनम् ।
विहितं न तथापीठे ह्येकस्मिन् सन्निवेशनम् ॥ २ ॥
भिन्नक्रमेपि यः कुर्या त्पृथग्वा पिण्डिकोपरि ।
वामदक्षिणयो रेवं देवानाममदक्षिणम् ॥ ३ ॥
सदक्षिणस्य वै तेन प्रतिष्ठापकमस्य च ।
निहता चोन्नता कीर्ति स्तेनाथ क्षय मेव हि ॥ ४ ॥
प्राक्स्थितस्याधिकं माना दक्षिणेनोऽर्चहानिकृत् ।
शस्तमप्यतनस्यैव प्राक्स्थितंयत्ततोधिकम् ॥ ५ ॥
नेच्छायन्योन्यसामन्तु स्थानवृत्तिधनैस्सह ।
वस्त्रासनसंल्पादि मानहीनस्तुसर्वदा ॥ ६ ॥

मानहीनस्तुकर्तॄणां कुर्यात्सुतसुखक्षयम् ।
विम्बस्यविम्बकर्तुर्वै देहिनांस्थापकस्यच ॥ ७ ॥
वामकुक्स्थापनं [वामे] यद्वा समममनन्तुवाधिकम् ।
एवंज्ञात्वायथाशक्ति पृथक्कुर्यान्निवेशनम् ॥ ८ ॥
सिद्धयेचापवर्गार्थ मर्चनांदेवतालये ।
प्रतोळीसांगनागार जगतीदेवमन्दिरम् ॥ ९ ॥
सपीठंभगवद्विम्बं भक्तानांयत्रयुज्यते ।
सम्यक्प्रदक्षिणीकृत्य बलिधुपपुरस्सरम् ॥ ३०० ॥
श्वेतद्वीपसमंविद्धि देवतायतनंतुतत् ।
सन्निवेशस्स्वयंमुख्यः अमुख्यस्सवपरोहियः ॥ १ ॥
मुख्यात्पूर्णफलमाप्ति र्मुख्याभावात्तथाविधा ।
सम्यकूस्थाप्यादिदेवीया मूर्तयोयाःपुरोदिताः ॥ २ ॥
स्थलंविनानचैवार्च्या नित्यविभैस्तुविम्बगाः ।
गृहेपीठगताविम्बे पुनस्तापत्रगावहिः ॥ ३ ॥
सदैवतैस्समाराध्या भूतयेपिहिमुक्तये ।
सवाहनेऽवाहने वा वहिर्वास्वगृहान्तरे ॥ ४ ॥
नार्चनीयानृपाद्यैस्तु बिम्बेवैमण्ड [सक] लादृते ।
सुपर्णसंस्थितास्सर्वे बिम्बावैब्राह्मणेर्नृपैः ॥ ५ ॥
स्वगृहादौचसर्वत्र पूजनीयास्सदैवहि ।
एवमन्यास्तुवैश्यान्तै स्सत्तमैरखिलास्तुयाः ॥ ६ ॥
सहशक्तीशभेदैस्तु नशक्तीशस्सवाहनः ।
बिम्बगोब्राह्मणाद्यैश्च नित्यमर्च्यं.पृथग्विना ॥ ७ ॥
स्वाश्रमे बन्धुवर्गस्य मध्यस्थो ह्यनिशन्तुवै ।
अविनासौम्यरूपेण अब्युत्पन्नजनस्यच ॥ ८ ॥
रुग्गतेभगवद्वक्त्रे कार्येवैलोक्यभीतिदे ।
यच्छन्तिशुभमाचार्यो श्चित्रस्थाश्चाशुभंगृहे ॥ ९ ॥

बहिष्कृताविशेषेण हर्म्यप्रासादभूमिषु ।
आहूयैर्भोगपदस्थैस्तु साम्प्रतंबिद्धिलाळसैः ॥ ३१० ॥
निष्प्रभावान्नमृच्छैली काष्ठादारुमयीगृहे ।
ऋतेसान्यासिकैश्शान्तै श्श्वन्मोक्षपरायणैः ॥ १ ॥
तदुत्थाश्चबहिस्सर्वैः कार्यास्तासुसदैवहि ।
जनयन्तिमहद्दीप्तिं चन्द्रसुर्योदयेनिशम् ॥ २ ॥
आचेकमूर्तैस्सर्वासां मूर्तीनान्तुमहामते ।
तथामूर्त्यन्तराणांच प्रादुर्भावगणस्यच ॥ ३ ॥
प्रादुर्भावान्तराणान्तु स्थितानांयत्रकुत्रचित् ।
सर्वेषांसर्वदातेषां हितआराधनायच ॥ ४ ॥
प्रणव.पीठपूजार्थ नमस्कारपदान्वितः ।
प्रसिद्धंचातुरात्मीयं संज्ञामन्त्रचतुष्टयम् ॥ ५ ॥
अर्चनेसाजितस्तु विनामन्त्रेणयोन्यथा ।
करोतिपूजनंमूढ श्चलबिम्बगणस्यच ॥ ६ ॥
गृहेवाज्ञातमन्त्रस्य दोषस्तस्यप्रजायते ।
विनासामान्यमन्त्रैर्व श्चलबिम्बगणस्यच ॥ ७ ॥
कुर्याद्विशेषमन्त्रेण विशेषारूपस्यचार्चनम् ।
तदुत्थमचिरेणैव शबलन्तस्य दोषकृत् ॥ ८ ॥
ज्ञात्वैवंसाधधानेन क्रियासक्तेनसर्वथा ।
भवितव्य विशेषाद्वै गृहाश्रमपरेणतु ॥ ९ ॥
क्ष्माभंगाद्येषु दोषेषु ध्वजान्तेष्वेवमेवहि ।
उपोद्घारे प्रवोक्तव्यं प्रणवाद्यष्पंचकम् ॥ ३२० ॥
होमार्चनविधानेषु सृष्टिसंहारकर्मणि ।
ध्वजाद्यङ्कुरेस्सर्वं मवनीचलनेसति ॥ १ ॥
आधारोपळपर्यंत तन्निवेश्यं तथापुनः ।
चक्रप्रासादभंगेषु सोर्ध्वेबिम्बम्महामते ॥ २ ॥

पीठभंगेतुवैबिम्बं बिम्बभंगेतदेवहि ।
यद्यदिच्छतिचेद्धर्तुं ततदादौतुसंपजेत् ॥ ३ ॥
मध्वाज्यगुळुक्षीर दधिद्राक्षादिभिः क्रमात् ।
सन्तर्प्य तिलहोमैस्तु सहस्रशतसंख्यया ॥ ४ ॥
मन्त्रौघं हृदयात्तस्मिन् समुच्चार्यविनिक्षिपेत ।
ज्वालवद्भ्रामुराकारं तत्रचिच्छक्तयोखिलाः ॥ ५ ॥
विशान्तिपूर्वसंरुद्धा मन्त्रौघं पुनराहरेत् ।
पाठयेद्दृक्ष्मयान्सर्वा श्रुतिविरदथतद्विदः ॥ ६ ॥
कर्मान्तेतदन्तेयै परमां प्रकृतिनिवति ।
चतुर्भिरनिरुद्धाद्यै स्वै स्वै मंत्रैः पृथक्पृथक् ॥ ७ ॥
कृत्वाहोमंचतद्वत्तु तत्संज्ञार्णैर्विलोमतः ।
प्रणवाद्यन्तगैस्सर्वैः प्राग्वदष्टासुदिक्षुच ॥ ८ ॥
प्रासादस्यसुहोतव्यं गायत्रीभिस्तथैवच ।
वासुदेवाद्यभिज्ञाभि र्होमांतेस्वथतैस्सह ॥ ९ ॥
न्यासंवाहनमन्त्रेण सांगंकृत्वात्मनातदा ।
वाहमानां तथाचैव प्रक्षैवं संस्मृत्शेदथ ॥ २३० ॥
सेचात्स्वहृदयेनैवं ज्ञपवक्षमथोद्धरेत ।
विमानेवारथेकृत्वा ह्यगाधेंभसिनिक्षिपेत् ॥ १ ॥
जपेत्संज्ञामनु [नारसिंहं] स्पष्टा त्स्रायश्चित्तार्थमेवच ।
सहस्रमेकमर्धन्त होतव्यं सर्वशांतये ॥ २ ॥
पूर्ववत्तोषयेत्सर्वान् कांचनाद्यैः स्वशक्तितः ।
तर्पयेदन्नपानाद्यै स्सर्वानाचार्य पूर्वकान् ॥ ३ ॥
वाचयन्तद्वादशार्णेन ह्यच्छिद्रंहृष्टमानसैः ।
भूयस्संस्थापनंकुर्या दुद्धृतस्यकृतस्यच ॥ ४ ॥
सामान्यलक्षणैर्मंत्रै श्चतुर्मूर्तिमयैस्सह ।
गुरुस्सप्रणवेनैव यस्सस्यग्भगवन्मयः ॥ ५ ॥

यतस्सप्रणवादन्य श्चातुरात्म्यंचविद्यते ।
मन्त्रोवादेवताकूप स्ताद्यतोग्रह्मवेदिनाम् ॥ ६ ॥
प्रपंचःप्रणवोमन्त्रो देवस्य चतुरात्मनः ।
एवंज्ञात्वापुराकर्म स्यापनोत्थापनोतिमम् ॥ ७ ॥
विधिवद्यागपूर्वंतु बिम्बसंचालनंविना ।
योदिव्यापतनादीनां भक्तयाभूयः करोतिच ॥ ८ ॥
उपजंघामन्दिरंशुभ्रं पीठं भासञ्चपिण्डिकां ।
शलोहशैलकाष्ठोत्थैः पद्माद्यैरूर्ध्वतोंकितां ॥ ९ ॥
एकानेकदलैश्चैव बद्धैरायसपूर्वकैः ।
सुगद्धां सूर्यसोमाग्निप्रभाभ्यां सुमनोरमाम् ॥ २४० ॥
स लोके शाश्वतीं कीर्तिं स्थापयित्वाकुले स्वह ।
स्थानं सायुज्यतापूर्वं देहान्ते नून माप्नुयात् ॥ १ ॥
नानारत्नप्रभाढ्यानि लांछनान्यंगदानि च ।
निर्मितानि सुवर्णाद्यै र्विभो स्संयोजयन्ति ये ॥ २ ॥
ते धौतकल्मषा स्सर्वे देह मासाद्य पावनम् ।
सम्यज्ज्ञानेन युज्यन्ते भवन्नायान्ति येन च ॥ ३ ॥
आत्मन श्चोपकाराय सर्वदुःखनिवृत्तये ।
अंगुष्ठाग्राद्य गुल्फान्त माजान्वंशावधीद्दिवा ॥ ४ ॥
मणिमुक्ताप्रवालाढ्य कवचं कांचनादिकम् ।
यः क्षिपत्यतिभक्तया वै स्वशक्त्याच्यांगते च्युते ॥ ५ ॥
स याति परमं स्थानं सपुत्रपशुबान्धवः ।
लग्नं यद्भगवन्मूर्ता वंगदं नूपुरादिकम् ॥ ६ ॥
वियोजयति यो मोहात् तस्य वीचौ स्थिरा स्थितिः ।
य. पंचकालसक्तानां विप्राणा मधिकारिणाम् ॥ ७ ॥

पञ्चरात्रविदां चैव द्विजानां सिद्धिकांक्षिणाम् ।
अथ योऽच्छिन्नशाखानां नारायणरतात्मनाम् ॥ ८ ॥
तपस्विनां वा व्रतिनां स्नातकब्रह्मचारिणाम् ।
भक्तानां मथवान्येषां मार्जनादौ रतात्मनाम् ॥ ९ ॥
प्रीतये परमेशाय कृत्वा सम्य क्प्रयच्छति ।
शालाद्यायतनोपेत मश्मपक्वेष्टकान्वितम् ॥ ३५० ॥
ग्राम्यै र्धान्यै स्तथारण्यै पूर्ण सम्पत्ति संयुतम् ।
वणिक्कुटुम्बभृतक रक्षापालै स्समन्वितम् ॥ १ ॥
सोनन्त फल माप्नोति काल माचन्द्रतारकम् ।
सस्थितिं शाश्वतीं लोके प्राप्नुया दक्षयं यशः ॥ २ ॥
भोगोपभोगिनीं भद्रां रम्यां पूर्वोक्तलक्षणाम् ।
यागनिष्पत्तये कुर्या द्योग्रत. पीठसन्निधे. ॥ ३ ॥
बहि राराधनार्थं वा कर्मिणा ब्रह्मचारिणाम् ।
मनुष्यपितृदेवाख्या न्मुच्यते स ऋणत्रयात् ॥ ४ ॥
मध्यतो गरुडाक्रान्त सचक्राम्बुरुहाङ्कितम् ।
तुर्याश्रमथवा वृत्त कुण्डवत्पदवीयुतम् ॥ ५ ॥
बलिपीठ बहिः कुर्या द्भक्त्या यस्त्वच्युतालये ।
स याति शाश्वत स्थान विमाने रिन्दुवर्चसे ॥ ६ ॥
य स्समकार माराम सम्प्रयच्छयति वै विभो ।
नान पुष्पफलोपेत वापीद्रुम [ कूप ] समाकुलम् ॥ ७ ॥
साञ्जतो याशयोपेत मारखड्गसमन्वितम् ।
स नन्दनवने भोगान् भुक्त्वा यात्यच्युतालयम् ॥ ८ ॥
क्षोणीं य स्सस्यसम्पूर्णां युक्तां वा गन्धशालिना ।
केदार जलपातैस्तु परिच्छिन्न समन्तत ॥ ९ ॥
स यच्छति जगद्योने काल मासाद्य शाश्वतम् ।
स यायात् सुखितद्वीप तत्रास्ते भगव न्निव ॥ ३६० ॥

स्नानोपभोगमन्यार्थं सवृपेन्द्रन्तु नागणम् ।
समर्चयिया देवेशं वैष्णवं प्रतिपादयेत् ॥ १ ॥
सोचिरान्मुक्तदोषस्तु विष्णुलोकं प्रयाति च ।
गजं रथं वराश्वं च दीपस्थालीं सुलक्षणाम् ॥ २ ॥
व्यजनं चामरं छत्रं वादित्रं गणिकागणम् ।
शुभवस्त्राणिनेत्राणि दिव्यान्याभरणानिच ॥ ३ ॥
वितानंवैजयन्तींच चित्रपत्रलतागणम् ।
सुस्वरासुपघण्टाश्च धूपस्थालींसुलक्षणाम् ॥ ४ ॥
भृंगारंदर्पणंतोयकुम्भंगन्धोपलंमहत् ।
पूर्वोद्दिष्टानिचान्यानि धान्यानिविविधानिच ॥ ५ ॥
योददातिहरेर्भक्त्या सतल्लोकमवाप्नुयात् ।
ईक्षमाणविभोर्वक्त्रं वहन्तंदीपभाजनम् ॥ ६ ॥
महान्तमथवादीपं यन्त्रंकृत्वादिरूपघृतं ।
शरयन्नासनस्थच चित्रसम्पुटभूषितम् ॥ ७ ॥
सच्छास्त्रपीठंविविधं श्रद्धयायोमहामते ।
ददातिदेवदेवस्य सतत्स्थानंप्रयातिच ॥ ८ ॥
पुरस्कृत्यजगद्योनिं यद्यतभक्त्याप्रदीयते ।
तदाराधनसक्तानां तत्तदक्षय्यतामियात् ॥ ९ ॥
इतिसम्बोधितात्विमा लोकधर्मव्यवस्थिताः ।
लांगलीदेवदेवेन सर्वानुग्रहकाम्यया ॥ ३७० ॥
मयामार्गजगद्धातुः प्रसादान्मोक्षसिद्धये ।
यथावद्द्यसर्वेषा मग्रतःप्रकटीकृतम् ॥ १ ॥
परम्पापहरम्पुण्यं पावनंचद्विभूतिदम् ।
इदंभव्याशयानांच वक्तव्यंभावितात्मनाम् ॥ २ ॥
भक्तानाममत्तानां पुण्डरीकाक्षसेविनाम् ।
गोपनीयमभक्तानां वाचछलादिरतात्मनाम् ॥ ३ ॥

अन्यायेनोपसन्नानां नास्तिकानांविशेषतः ।
योगोपायत्वयोग्यानां योग्यानांसम्प्रयच्छति ॥ ४ ॥
इममर्थसमान्योमे स्वस्तिवोस्तुव्रजाम्यदम् ॥ ३७५ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्

प्रतिष्ठादिविधि र्नाम

पंचविंशः परिच्छेदः ॥ २५ ॥

समाप्ता च सात्वतसंहिता ।

